Sri Vani Vilas Sanskrit Series

No. 6. 

# Achyutarayabhyudayam

OF

Sri Rajanatha

with a commentary

BY

Pandit R. V. KRISHNAMACHARIAR,

(Abhinava Bhatta Bana)

PART I

Cantos 1–6.



Srirangam:
SRI VANI VILAS PRESS.
1907.

॥ श्रीः ॥

# ॥ अच्युतरायाभ्युदयम् ॥

## श्रीराजनाथमहाकविकृतम् ।

"अभिनवभट्टबाण शब्दतर्कालङ्कारविद्याभूषण" बिरुद-
भाजा वात्स्यचक्रवर्तिना श्रीकृष्णसूरिणा
विरचितया लघुपञ्जिकया
समेतम् ।



श्रीरङ्गनगरे
श्रीवाणीविलास मुद्रायन्त्रालये
संमुद्रितम् ।

१९०७.

wn by the title of "Tiruvadi," hearing of the expedi- of the emperor of Vijayanagar, collected his forces took his stand on the shores of the Tambraparni. A lar battle ensued between the two opposing forces the result that the Vijayanagar army was victorious. nediately, the Chera king handed over the Chola king 'rince Salagaraja and took refuge under him. Prince garaja recognised the Chera king and gave back to Pandyan Chief the dominions that were once his. n desiring to worship God Anantapadmanabha on his irn way, he reached the Malaya Mountain and the

ich is the history narrated in the first six cantos. have several accounts of the reign of Krishna Raya in the Empire of Vijayanagar was at its zenith, but Achyuta Raya the existing records are very few. nce this Mahakavya is very valuable as a contribution History. When the other six cantos also are publish- Professor M. Rangachariar M.A. has kindly under- en to write a critical introduction to the whole work. anwhile we commend this Part to the critical study ill Sanskrit Scholars.

We take this opportunity to thank Pandit T. S. Kuppu- amy Sastriar who first suggested to us the publication this work. In the preparation of this edition we had help of six manuscripts, four from Tanjore, one from yar and another from the Government Oriental Mss. rary. Being the fist edition the commentator ex-

perienced some difficulty in choosing the best reading from the different manuscripts and it is quite probabl that with all his care some mistakes might still hav crept in. These, we hope to rectify, in the secon edition.

Srirangam,
*15th March 1907.*

*T. K. Balasubrahmanyai*

॥ श्रीः ॥

श्रीराजनाथकविविरचितं

# ॥ अच्युतरायाभ्युदयम् ॥

## प्रथमः सर्गः ।

नालीकाक्षमलीकाक्षं नागेशयमगेशयम् ।
विपुंगवध्वजं धाम पुंगवध्वजमाश्रये ॥

श्रीनिवासमनुस्मृत्य श्रीकृष्णो नव्यमार्गेण ।
बालावबोधनकृते कुरुते लघुपञ्चिकाम् ॥

**नालीकेति** । नालीके कमले इव अक्षिणी यस्य तत् तथोक्तम् । अलीकाक्षभिन्न च । अलीके ललाटे अक्षि यस्य तत् तादृशम् । नागे आदिशेषे शेते इति तत् तादृशम् । अगेशयभिन्न च । अगे पर्वते शेत इति तादृशम् । वीनां पक्षिणां पुंगवः श्रेष्ठः गरुडः स ध्वजे यस्य तत् तथोक्तम् । पुंगवध्वजभिन्न च । पुंगवः पुमान् गौः वृषभः ध्वजे यस्य तत् तादृशम् । धाम तेजः विष्णुं शिव चेत्यर्थः । आश्रये भजे । **विरोधाभासः** ॥

अव्यादपूर्वो निधिरागमाना-
माद्यो वृषाद्रेः पतिरच्युतेन्द्रम् ।
निरीक्षितुं निःस्पृहकाङ्क्षितं यं
निरञ्जना एव जनाः क्षमन्ते ॥ १ ॥

**अव्यादिति** । अपूर्वः निध्यन्तरविलक्षणः । आगमानां शास्त्राणां वेदानां वा, धनागमनानां च । निधिः शेवधिः । आद्यः सर्वजगतामादिमः । आद्य इति निधिविशेषणं वा । वृषाद्रेः पतिः वृषशैलेश्वरः श्रीनिवासः । अच्युतेन्द्रं एतत्काव्यनायकं अच्युतरायम् । अव्यात् रक्षतु । निःस्पृहैः अलिप्सुभिः, वीतरागैश्च काङ्क्षितं अभिलषितम् । य वृषाद्रिपतिनिधिम् । निरीक्षितुं द्रष्टुम् । निरञ्जनाः निध्यञ्जनमितिप्रसिद्धाञ्जनशून्याः, विषयलेपरहिताश्च । जना एव । क्षमन्ते शक्नुवन्ति । अन्ये निधयः सस्पृहैरेव काङ्क्ष्यन्ते, दृश्यन्ते च साञ्जनैरेवेत्यतोऽस्य निधेर्विलक्षणत्वमिति भावः ॥ **रूपकं व्यतिरेकश्च** ॥

धम्मिल्लशैवालधरा विराज-
दपाङ्गमीनाधरविद्रुमाप्ता ।
धन्या पितृच्छायतयाब्धिकन्या
तन्यादवन्यां श्रियमच्युतेन्दोः ॥ २ ॥

**धम्मिल्लेति** । धम्मिल्लः चिकुर एव शैवाल शैवलः तस्य धरा धारयित्री । विराजन् शोभमानः अपाङ्गः नेत्रान्त एव मीनः यस्याः सा तादृशी । अधरः ओष्ठ एव विद्रुमः प्रवालः तं आप्ता प्राप्ता । अत एव, पितृच्छायतया पितुः छायेव छाया यस्याः तस्या भावेन पितृतुल्यतयेत्यर्थः । धन्या कृतार्था, धनवती च । अब्धिकन्या लक्ष्मीः । **अवन्यां**

मौ । अच्युतेन्दोः अच्युतरायस्य, विष्णोश्च । श्रियं संपदं, शोभां च । न्यात् करोतु । पितृच्छाया कन्या भाग्यवतीति पत्युरैश्वर्यपोषिणी चेति सामुद्रिकाः । **रूपकं काव्यलिङ्गं च** ॥

**सुवर्णरूपैः शुभनायकाङ्कै-**
**रौज्ज्वल्यवद्भिर्ध्वनिमश्नुवानैः ।**
**परिष्कृतादिक्षितिपान्प्रबन्धैः**
**प्राचेतसादीन्प्रणुमः कवीन्द्रान ॥ ३ ॥**

**सुवर्णेति** । सुवर्णरूपैः शोभनवर्णात्मकैः, कनकमयैश्च । शुभः नायकः नेता मध्यमणिश्च अङ्कः चिह्नं येषां तैः तथोक्तैः । औज्ज्वल्यवद्भिः कान्त्याख्यगुणविशिष्टैः, प्रकाशमानैश्च । ध्वनिं ध्वन्याख्योत्तमकाव्यतां व्यङ्ग्यमर्यादां वा, शब्दं च । अश्नुवानैः प्राप्तैः । प्रबन्धैः स्वस्वप्रबन्धैरेव भूषणैः । परिष्कृताः अलंकृताः आदिक्षितिपाः रामाद्याः नृपतयः यैस्तान तादृशान् । प्राचेतसादीन् वाल्मीकिप्रमुखान् । कवीन्द्रान् कविश्रेष्ठान । प्रणुमः स्तुमः । णु स्तुतौ अदादिः । **समासोक्तिः** ॥

**कथं नु वर्ण्या भुवि कालिदास-**
**मयूरमङ्खादिमहाकवीन्द्राः ।**
**पुरातनीं पूरुषभूमिकां य-**
**द्वेषेण धृत्वा विननर्त वाणी ॥ ४ ॥**

**कथमिति** । कालिदासमयूरमङ्खादिमहाकवीन्द्राः । भुवि । कथं केन प्रकारेण । वर्ण्याः वर्णयितुं शक्याः । वाणी सरस्वती । यद्वेषेण येषां कालिदासादीनां रूपेण । पुरातनीं प्राचीनां यशसा चिरावस्थायिनीं वा पूरुषभूमिकां पुरुषवेषं पुस्त्वमित्यर्थः । धृत्वा । विननर्त नृत्यति स्म ॥

अस्ति स्मरप्राभृतमक्षि शौरे-
रदक्षिणं शेखरपुष्पमैशम् ।
अपां निधेरद्भुतनाट्यविद्या-
गुरुश्चकोरीकुलबन्धुरिन्दुः ॥ ५ ॥

**अस्तीति** । स्मरस्य मन्मथस्य प्राभृतं उपायनम् । शौरेः विष्णोः अदक्षिणं अक्षि वामं चक्षुः । ऐशं शिवसबन्धि । शेखरपुष्प अ' कुसुम शिवेन शिरसि धार्यमाण इत्यर्थः । अपां निधेः समुद्रस्य । तकरी या नाट्यविद्या कल्लोलोल्ललनमित्यर्थः तस्याः गुरुः । चको कुलस्य समूहस्य बन्धुः चकोरीणां कुलबन्धुरिति वा । इन्दुः चन्द्रः अस्ति । **रूपकम्** ॥

प्रायेण यः क्षोणिभृदुत्तमाङ्गे
पादार्पणं सत्पथसेवनं च ।
करोत्यरिश्रेणिकदर्थनं च
कुर्वन्तु सर्वे कुलजा ममेति ॥ ६ ॥

**प्रायेणेति** । यः चन्द्रः । सर्वे । मम । कुलजाः वंशजाताः । कुर्वन्तु मया क्रियमाणं स्वयमपि आचरन्तु । इति मत्वेव । क्षोणिभृतां पर्वतानां राज्ञां च उत्तमाङ्गे शिखरे शिरसि च । पादानां किरणानां पादयोः चरणयोश्च अर्पण न्यासम् । सत्पथस्य आकाशस्य सन्मार्गस्य च सेवन आश्रयण च । अरिश्रेण्याः चक्रवाकसमूहस्य शत्रुगणस्य च कदर्थन पद्रवं च । प्रायेण भूम्ना करोति । अरिशब्दस्य चक्रवाचितया चक्रपर्याणां च चक्रवाकबोधकत्वेन प्रकृते चक्रवाकपरत्वम । **श्लेष उत्प्रेक्षा च** ॥

सरोजभद्रासनसौमनस्या-
त्सुधाप्रदानात्सुमनोजनानाम् ।
सदापि नाकाश्रयसौहृदाद्यः
पुष्णाति चर्यां पुरुषत्रयीयाम् ॥ ७ ॥

**सरोजेति** । यः । सरोजानां पद्मानां भद्रस्य विकासरूपस्य मङ्गलस्य असने निरसने सौमनस्यात् प्रीत्या । पक्षे सरोजमेव भद्रासनं सिंहासन तत्र सौमनस्यात् प्रियत्वात् । सुमनोजनानां देवानाम् । सुधाप्रदानात् अमृतप्रदानात् । उभयत्र तुल्यम् । सदा सर्वदापि । नाकस्य आकाशस्य आश्रये, आश्रयणे सौहृदात् स्नेहात् । पक्षे सदा सर्वदा । पिनाकस्य तदाख्यस्य शिवधनुषः आश्रये सौहृदात् । पुरुषत्रयीयां ब्रह्मविष्णुरुद्ररूपमूर्तित्रयसबन्धिर्नाम् । चर्यां क्रियाम् । पुष्णाति करोति । **श्लेषनिदर्शने** ॥

वियुक्तवर्गे विहितप्रतापः
संयुक्तलोके सरसप्रभावः ।
उदञ्चितो राजपदानुकूलं
यो मण्डलं धारयतेऽनुरक्तम् ॥ ८ ॥

**वियुक्तेति** । यः । वियुक्तवर्गे विरहिसमूहे, पक्षे अयुक्तकारिणां शत्रूणां वा गणे । विहितः कृतः प्रतापः प्रकृष्टः तापः, कोशदण्डज तेजश्च येन स तथोक्तः । संयुक्तलोके परस्परसंमिलितमिथुनजने, पक्षे युक्तकारिणि जने मित्रजने वा । सरसः आर्द्रः प्रभावः महिमा, प्रकृष्टो भावः आशयश्च यस्य स तादृशः । उदञ्चितः उदयमापन्नः, पूजितश्च सन् । राजपदस्य रञ्जयतीति व्युत्पत्त्या नृपतिवाचकस्य राजेति शब्दस्य राज-

स्थानस्य वा अनुकूलं अनुगुणं यथा तथा । राजेति पदं चन्द्रनृपत्युभय-वाचकम् । मण्डलं स्वबिम्बं, राष्ट्रं च । अनुरक्तं रक्तवर्णं, अनुराग-विशिष्टं च । धारयते "धारयते नु रक्तम्" इति पाठान्तरम् ॥

आशाभिपूर्तेरनुरूपमेव
वर्षन्प्रकर्षाद्वसुमण्डलानि ।
औदार्यभाजामवनीरुहाणां
व्यनक्ति यः सोदरताविलासम् ॥ ९ ॥

**आशेति** । यः । आशानां दिशां, मनोरथानां च अभिपूर्तेः पूरणस्य । अनुरूपं अनुगुणमेव । वसुमण्डलानि किरणसमूहान्, धनराशींश्च । प्रकर्षात् आधिक्येन । वर्षन् सन् । औदार्यं दातृत्वं भजन्तीति तेषाम् । अवनीरुहाणां वृक्षाणां कल्पतरूणामित्यर्थः । सोदरतायाः सहोदरत्वस्य विलास शोभाम् । कल्पकतरूणां चन्द्रस्य च समुद्रादुत्पन्नत्वादिति भावः । व्यनक्ति प्रकाशयति ॥

क्षेमंकरः कैरवसंसदां यो
वामं हरस्येक्षणमेव नैकम् ।
उदीर्यतेऽध्वन्यजनैर्द्वितीयं
संचिन्त्यते चक्रकुलैस्तृतीयम् ॥ १० ॥

**क्षेमंकर इति** । कैरवसंसदां कुमुदखण्डानाम् । क्षेमंकरः । यः । हरस्य । एकं वामं ईक्षण एव न । किं तु, अध्वन्याः पथिकाः ये जनाः तैः । हरस्य, द्वितीयं ईक्षणं सूर्यरूपं चक्षुः । उदीर्यते । चक्रकुलैः चक्रवाक

समूहैः । तृतीयं अग्निरूप ईक्षणं नेत्रम् । संचिन्त्यते विचार्यते । पथिकेषु चक्रवाकेषु च विषये चन्द्रस्य तापकरत्वादिति भावः । **उल्लेखः** ॥

**कथं ब्रुवे यस्य कलानुषक्ता**
**आलोकमात्रादपि चञ्चरीकाः ।**
**व्याकुर्वते कैरवपीठिकासु**
**विद्याविशेषान्विषमायुधीयान् ॥ ११ ॥**

**कथमिति** । कथं केन प्रकारेण । ब्रुवे वर्णयामि । चञ्चरीकाः भृङ्गाः । यस्य चन्द्रस्य । आलोकः प्रकाशः, दर्शनं च । आलोक एव आलोकमात्र तस्मादपि । कलानुषक्ताः कलासु विद्यासु अनुषक्ताः संबद्धाः । कलाभिः विद्याभिः अनुषक्ताः युक्ता वा । पक्षे कले अव्यक्तमधुरध्वनौ अनुषक्ताः सन्तः । कैरवाण्येव पीठिकाः विद्यापीठानि तासु । स्थिताः सन्तः । विषमायुधीयान् मन्मथसंबन्धिनः । विद्याविशेषान् विद्याभेदान् । व्याकुर्वते विवृण्वन्ति । "यस्य कलानिधित्वम्" इति पाठान्तरम् । **रूपकम्** ॥

**विमोहिनीं यो विधुरेत्य मूर्तिं**
**सुधां ददानः सुमनोजनाय ।**
**अस्वप्रवृत्त्याश्रयतोऽवतार**
**आलक्ष्यते यस्तमसो निहन्ता ॥ १२ ॥**

**विमोहिनीमिति** । यः विधुः चन्द्रः, विष्णुश्च । सुमनोजनाय देवेभ्यः । सुधां अमृतम् । ददानः प्रदिशन्, सुधाप्रदानायेत्यर्थः । विमोहिनीं विशेषेण मोहयति द्रष्टॄन् आश्चर्यपरवशान् करोतीति तां, मोहिनीसंज्ञकस्त्रीरूपां च । मूर्तिं स्वरूपम् । एत्य प्राप्य । अस्वप्रवृत्तेः

प्रकाशदशायाः आश्रयतः आश्रयणात्, पक्षे अस्वप्रभूर्नानां देवानां आश्रयतः आश्रयणात् तद्रक्षणार्थमित्यर्थः । अवतारः अपगतनक्षत्रः विरलनक्षत्र इति यावत्, सुप्रसिद्धः अवतारश्च । आलक्ष्यते दृश्यते, अवतारत्वेन ज्ञायत इत्यर्थः । चन्द्रे प्रकाशमाने नक्षत्राणि नातीव भान्तीति स्थितिः । तथा च मुरारिः । 'भूयस्तराणि यदुडूनि तमस्विनीषु ज्योत्स्नीषु च प्रविरलानि ततः प्रतीमः ।' इति । यत् यस्मात्कारणात् । तमसः अन्धकारस्य, राहोश्च । निहन्ता नाशकः । 'अवतारमालक्ष्यते यस्तमसो नियन्ता ।' इति पाठान्तरम् । **श्लेषः, उत्प्रेक्षा रूपकं वा** ॥

आचारतो धर्म इवावदाता-
दबाधितो हर्ष इवात्मबोधात् ।
ततो बुधाख्यस्तनयस्ततोऽभू-
च्छमः श्रुतानामिव संप्रदायात् ॥ १३ ॥

**आचारत इति** । ततः अनन्तरम् । अवदातात् परिशुद्धात् । आचारतः आचारात् । धर्म इव । आत्मबोधात् आत्मज्ञानात् । अबाधितः श्रेष्ठः । हर्षः आनन्द इव । श्रुतानां शास्त्राणां श्रवणानां वा । सम्प्रदायात् । शमः शान्तिरिव । ततः तस्माच्चन्द्रात् । बुधाख्यः बुधनामा । तनयः पुत्रः । अभूत् उत्पन्नः । **मालोपमा** ॥

पुरूरवाः पुण्यफलादतोऽभू-
दभूतपूर्वाभ्युदयस्य यस्य ।
प्रशस्तिमुद्रालिखनाद्रिशालं
प्रत्यर्थिवक्षः फलकं किलासीत् ॥ १४ ॥

**पुरूरवा इति** । अतः अस्मात् बुधात् । पुण्यफलात् पुण्यफलेन ।

इदं अत इत्यस्य विशेषणं वा । पुरूरवाः तन्नामा राजा । अभूत् । अभूतपूर्वः पूर्वं कस्याप्यजातः अभ्युदयो यस्य तस्य तादृशस्य । यस्य पुरूरवसः । प्रशस्तिमुद्रायाः प्रशस्तिचिह्नस्य लिखनात् । विशालम् । प्रत्यर्थिनां शत्रूणां वक्षः उरः । फलकम् । आसीत् किल । तदेव हि फलकं, यत्र लिख्यत इति भावः । अनेन शत्रूणां वक्षांसि बाणैः कीलितानीति परमार्थः । प्रशस्तिमुद्रालिखनात् , फलकं फलकत्वेन संभाव्यमानम् । प्रत्यर्थिवक्षः । विशालं वीनां पक्षिणां शाला । विभाषा सेनासुरेति नपुंसकत्वमित्यन्ये । लिखनमित्यत्र गुणाभावश्चिन्त्यः । लिखतेरकुटादित्वात् । **उत्प्रेक्षा** ॥

**आयुस्ततोऽभूदधिभूरवन्याः**
**प्रभिद्य शक्त्या परभूभृतं यः ।**
**हेतुर्यशोहंसविजृम्भणाना-**
**मेति प्रथां स्कन्द इवेन्दुमौलेः ॥ १५ ॥**

**आयुरिति** । अवन्याः भूमेः । अधिभूः नायकः । आयुः तन्नामा राजा । इन्दुमौलेः परमेश्वरात् । स्कन्दः सुब्रह्मण्य इव । ततः पुरूरवसः । अभूत् । यः । शक्त्या बलेन, तदाख्यायुधेन च । परभूभृतं शत्रुनृपतिं, उत्कृष्टं क्रौञ्चपर्वतं च । प्रभिद्य भित्त्वा । यशांसि हंसा इव यशांस्येव हंसा वा यशोहंसाः, पक्षे यशांसीव हंसाः, तेषां विजृम्भणानां विलासानाम् । हेतुः सन् । प्रथां विख्यातिम् । (स्कन्द इव) एति प्राप्नोति ॥

**नाथः पृथिव्या नहुषाभिधोऽस्मा-**
**ज्जज्ञे यदाज्ञाजनितावतंसाः ।**

बृन्दारका नो बहुमन्वते स्म
मन्दारमालां मधुपात्तगन्धाम् ॥ १६ ॥

**नाथ इति** । अस्मात् आयुषः । नहुषाभिधः नहुषनामा । पृथिव्याः नाथः राजा । जज्ञे जातः । बृन्दारकाः देवाः । यस्य नहुषस्य आज्ञया जनितः संपादितः अवतंसः शेखरः येषां ते तादृशाः सन्तः । मधुपैः भृङ्गैः, मद्यपायिभिश्च आत्तगन्धां गृहीतसौरभ्यां, अभिभूतां च । मन्दारमालाम् । न बहुमन्वते न गणयन्ति । नहुष इन्द्रपदं प्रापेति पुराणम् ॥

अस्मादभूद्विस्मयभूर्ययाति-
भयातिरेकस्तिमिताभियातिः ।
कुलाधिनाथस्य कला इवान्या
विधोर्व्यधाद्यो विशदैर्यशोभिः ॥ १७ ॥

**अस्मादिति** । अस्मात् नहुषात् । विस्मयभूः आश्चर्यभूमिः । भयातिरेकेण भयाधिक्येन स्तिमिताः स्तब्धीकृताः अभियातयः शत्रवः यस्य स तथोक्तः । ययातिः तन्नामा नृपतिः । अभूत् । यः ययातिः । विशदैः धवलैः । यशोभिः कीर्तिभिः । कुलाधिनाथस्य कूटस्थस्य । विधोः चन्द्रस्य । अन्याः । कलाः भागान् । व्यधात् उत्पादयामासेव ॥

अजायताव्याजसुहृत्प्रजानां
स धूर्वहस्तुर्वसुरुर्वरायाः ।
अस्य प्रतापांशुमता विचित्र-
ममित्रकान्ता ज्वलिता यदन्तः ॥ १८ ॥

**अजायतेति** । जनानाम् । अव्याजसुहृत् अकृत्रिमं मित्रम् । उर्व-

रायाः सर्वसस्याढ्यायाः भूमेः । धूर्वहः धुरन्धरः । सः प्रसिद्धः । तुर्वसुः । अजायत । अस्य तुर्वसोः । प्रतापः तेज एव अंशुमान् सूर्यः तेन । अमित्राणां शत्रूणां कान्ताः स्त्रियः । पक्षे मित्रस्य सूर्यस्य कान्ताः उपलाः मित्रकान्ताः तद्भिन्नाः अमित्रकान्ताः चन्द्रकान्ता इत्यर्थः । अन्तः हृदये । ज्वलिताः उत्तप्ताः, प्रदीप्ताश्च । आसन्निति यत् तत्, चित्रं आश्चर्यभूतम् । सूर्ये प्रकाशमाने सूर्यकान्ता एव ज्वलन्तीति स्थितिः । अमित्रकान्तौज्ज्वल्यं तु विस्मयकरमिति भावः । **विभावना** ॥

संचारिणः शौर्यरसा इवाग्रे
नेत्राध्वनीना इव नीतिसाराः ।
सजीवबन्धा इव सद्गुणौघाः
सौजन्यमुद्रा इव सप्रतीकाः ॥ १९ ॥

नाभागवीप्सा नहुषानुवादा
निमेर्विभाषा नृगमूर्तिभेदाः ।
द्विरुक्तयो दाशरथेर्दिलीप-
स्यावृत्तयो धर्मभुवो विकल्पाः ॥ २० ॥

मदावला मांसलदानकेल्यां
महीभृतां पक्षहृतौ महेन्द्राः ।
ससत्त्वतायां सरितामधीशाः
षडाननाः किं च सशक्तितायाम् ॥ २१ ॥

अपत्रपामंहतिवैभवेन
सुरद्रुमाणामपि सूचयन्तः ।
तदन्वये पुण्यफलादवन्यां
धन्या बभूवुर्धरणीभुजोऽन्ये ॥ २२ ॥

कलापकेन वर्णयति — **सञ्चारिण इत्यादिना**। अग्रे पुरस्तात्। सञ्चारिणः सञ्चरणशीलाः। शौर्यरसा इव। नेत्रयोः चक्षुषोः अध्वनीनाः पथिकाः नेत्रगोचरा इत्यर्थः दृश्यमाना इति यावत्। नीतिसारा इव। सजीवबन्धाः सप्राणाः। सद्गुणानां ओघाः समूहा इव। सप्रतीकाः शरीरिणः। सौजन्यस्य सुजनतायाः मुद्राः स्वरूपाणीव (स्थिताः) नाभागस्य तदाख्यस्य नृपतेः वीप्साः। नहुषस्य अनुवादाः। निमेः विभाषाः। नृगस्य मूर्तिभेदाः स्वरूपभेदाः। दाशरथेः रामस्य। द्विरुक्तयः। दिलीपस्य आवृत्तयः। धर्मभुवः धर्मपुत्रस्य। विकल्पाः। अत्र वीप्सादिशब्दाः पर्यवसानगत्या सादृश्यगमकाः। तथा च प्रयुज्यते। 'द्विर्भावः पुष्पकेतोर्विबुधविटपिनां पौनरुक्त्यं विकल्पश्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्तिः। द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्वन्नानन्दं कोविदानां जगति विजयते श्रीनृसिंहक्षितीन्द्रः ॥' इति ॥ मांसलं अधिकं यत् दानं वितरणमेव दानं मदजलं तस्य केल्यां लीलायाम्। मांसलदानकेलिरेव मांसलदानकेलिरिति विशिष्टं रूपकं वा। मदावलाः गजाः। महीभृतां राज्ञामेव पर्वतानाम्। पक्षाः सहाया एव पक्षाः गरुतः तेषां हर्ता नाशने छेदे इत्यर्थः। महेन्द्राः। सत्वं सत्वगुणः सत्वानि व्यवसाया वा तान्येव सत्वानि जन्तूनि तैः सह वर्तन्त इति ससत्वाः तेषां भावः ससत्वता तस्याम्। यद्वा ससत्वता गाम्भीर्यम्। सरितां अधीशाः समुद्राः। किं च। शक्तिः बलमेव शक्तिः आयुधविशेषः

तत्सहितता सशक्तिता तस्याम् । षडाननाः सुब्रह्मण्याः । अंहतेः दानस्य वैभवेन महिम्ना । सुरद्रुमाणां कल्पवृक्षाणामपि । अपत्रपां लज्जाम् । सूचयन्तः उत्पादयन्तः । धन्याः सुकृतिनः । अन्ये । धरणीभुजः राजानः । अवन्याम् । पुण्यफलात् । तस्य तुर्वसोः अन्वये वंशे । बभूवुः जाताः । क्रमेण **उत्प्रेक्षा, उपमा, रूपकं, अतिशयोक्तिश्च** ॥

नालीकिनीनायकवद्ग्रहेषु
नीहारभूमीधरवन्नगेषु ।
वलासुहृद्वारणवद्गजेषु
तेषु प्रतीतोऽजनि तिम्मभूपः ॥ २३ ॥

**नालीकिनीति** । ग्रहेषु चन्द्रादिषु । नालीकिन्याः पद्मिन्याः नायकः सूर्यः स इव । नगेषु पर्वतेषु । नीहारभूमीधरवत् हिमवत्पर्वत इव । गजेषु । वलस्य तदाख्यदानवस्य असुहृत् शत्रुः इन्द्रः तस्य वारणः गजः ऐरावत इत्यर्थः, स इव । तेषु तुर्वसुकुलोत्पन्नेषु राजसु । तिम्मभूपः तिम्माख्यो राजा । प्रतीतः विख्यातः । अजनि बभूव ॥

निजेन दोष्णा निखिलां धरित्री-
मस्मिन्वहत्यङ्गदनिर्विशेषम् ।
तद्युक्तमीशेन तदोरगाणां
कुलोद्वहः कुण्डलितो यदासीत् ॥ २४ ॥

**निजेनेति** । अस्मिन् तिम्मभूपे । निजेन । दोष्णा भुजेन । निखिलां समस्ताम् । धरित्रीं भूमिम् । अङ्गदनिर्विशेषं अङ्गदतुल्यं यथा तथा । वहति सति । ईशेन परमेश्वरेण । उरगाणां सर्पाणाम् । कुलोद्वहः कुलश्रेष्ठः

शेष इत्यर्थः। कुण्डलितः कुण्डलनाख्यचिह्नविशेषं प्रापितः, पक्षे मण्डलीकृतः कर्णवेष्टनं कृतो वा। आसीदिति यत्। तत्। युक्तम्। यत्र लिखितस्य ग्रन्थस्य वैयर्थ्यं तत्र कुण्डलना क्रियते इति संप्रदायः। 'तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा। तनोति भानोः परिवेषकैतवात्तदा विधिः कुण्डलनां विधोरपि॥' इति नैषधे। **उत्प्रेक्षा**॥

प्रतिक्षमापावलि पर्यटन्त्या
वीरश्रियो विश्रमहेतुबाहुः।
श्रीतिम्मभूपाज्जितभूस्ततोऽभू-
द्यशोधनादीश्वरभूमिपालः॥ २५॥

**प्रतिक्षमापेति**। प्रतिक्षमापावलि प्रतिराजसमूहम्। पर्यटन्त्याः भ्रमन्त्याः। वीरश्रियः वीरलक्ष्म्याः। विश्रमस्य विश्रान्तेः हेतुभूतौ बाहू यस्य स तथोक्तः। जिता भूः येन स तादृशः। ईश्वरभूमिपालः ईश्वरनामा राजा। यशोधनात्। ततः तस्मात् तिम्मभूपात्। अभूत्॥

वृषाङ्कयोरीश्वरयोर्विभूति-
मुपेयुषोरेष परं विशेषः।
राजोत्तमाङ्गे रचिताङ्घ्रिरेक-
स्तत्पादधन्यस्वशिरा यदन्यः॥ २६॥

**वृषेति**। वृषः धर्मः वृषभश्च अङ्कः भूषणं चिह्नं च ययोस्तयोः तथोक्तयोः। विभूतिं ऐश्वर्यं भस्म च। उपेयुषोः प्राप्तयोः। ईश्वरयोः ईश्वरराजस्य शिवस्य च। एष परं एष एव। विशेषः भेदः। एकः ईश्वरनृपतिः। राज्ञां उत्तमाङ्गे शिरसि। रचिताङ्घ्रिः न्यस्तपादः। अन्यः ईश्वरः शिवस्तु।

तेषां राज्ञां, पक्षे तस्य राज्ञः चन्द्रस्येत्यर्थः पादेन चरणेन रश्मिना च धन्यं कृतार्थं स्वशिरः यस्य स तथोक्तः । इति यत् एष परं विशेष इत्यन्वयः ॥

क्रमादभूतामथ बुक्कमायां

नृसिंहतिम्माक्षितिपालसिंहौ ।

प्रतीकवन्ताविव दोःप्रताप-

यशोगुणावीश्वरभूवलारेः ॥ २७ ॥

**क्रमादिति** । अथ । प्रतीकवन्तौ शरीरिणौ । ईश्वरभूवलारेः ईश्वर-राजस्य । दोःप्रतापः भुजपराक्रमः स च यशोगुणश्चेत्येताविव स्थितौ । नृसिंहतिम्माविति क्षितिपालसिंहौ राजश्रेष्ठौ । बुक्कमायां बुक्कमादेव्याम् । क्रमात् । अभूतां उत्पन्नौ ॥

आरभ्य बाल्यादजनि प्रजाना-

मानन्दहेतुर्नरसावनीन्द्रः ।

प्रौढोऽर्भको वा पतिरुत्पलिन्याः

प्रमोदनत्वे परिहीयते किम् ॥ २८ ॥

**आरभ्येति** । नरसावनीन्द्रः नृसिंहराजः । बाल्यात् आरभ्य । प्रजानां आनन्दहेतुः अजनि । प्रौढः संम्पूर्णः । अर्भकः बालो वा । उत्पलिन्याः पतिः चन्द्रः । प्रमोदनत्वे सन्तोषकारित्वे । परिहीयते हानो भवति किम् ॥

महीपतिर्मानवनाम दुर्गं

शकाधिनाथेन समं गृहीत्वा ।

स्फुटीचकारास्य पुनर्वितीर्य
शौर्यं तथौदार्यमवार्यचर्यम् ॥ २९ ॥

**महीति** । महीपतिः नृसिंहनृपतिः । मानवनाम दुर्गम् । शकाधिनाथेन समं तुरुष्कराजेन सह । गृहीत्वा । अस्य सम्बन्धसामान्ये षष्ठी अस्मै इत्यर्थः । अस्येत्यस्य स्फुटीचकारेत्यत्रान्वयो वा । पुनः । वितीर्य दत्त्वा । अवार्यचर्यं अनिवारितप्रक्रमम् । शौर्यम् । तथा । औदार्यं दातृत्वं च । स्फुटीचकार प्रकाशयामास ॥

प्रायोऽर्णवे सेतुकृतोऽवतारः
प्राग्जन्मसंस्कारवशादिवैषः ।
सेतुं विधायाम्भसि सह्यजायाः
श्रीरङ्गपूर्वां नगरीं जहार ॥ ३० ॥

**प्राय इति** । प्रायः प्रायेण । । अर्णवे समुद्रे । सेतुकृतः सेतुनिर्मातुः श्रीरामभद्रस्येत्यर्थः । अवतारः । एषः नरसिंहराजः । प्राग्जन्मसंस्कारः पूर्वजन्मवासना तद्वशादिव । सह्यजायाः कावेर्याः । अम्भसि जले । सेतुम् । विधाय । श्रीरङ्गपूर्वां नगरीं श्रीरङ्गपट्टणम् । जहार वशीचकार । **उत्प्रेक्षा** ॥

कंसं यथा कैटभजिद्बलेन
समन्वितः सैनिकमल्लहन्ता ।
मदप्रवृत्तं मरवं मथित्वा
महीमहेन्द्रो मधुरामहार्षीत् ॥ ३१ ॥

**कंसमिति** । महीमहेन्द्रः नृसिंहभूपतिः । बलेन सैन्येन पक्षे बलरा-

क्रुधापतन्तं सह कुञ्जरौघैः
कोनेटिराजं क्षुभितान्यसैन्यः ।
जग्राह पाणौ जगदेकवीरो
जयाब्धिकन्यामपि जन्यभूमौ ॥ ३३ ॥

**क्रुधेति** ॥ जगदेकवीरः लोकैकशूरो नृसिंहराजः । बाहुलकात् 'एक-वीर" इति साधुः । यद्वा एकेषु मुख्येषु वीरयते पराक्रमते इति व्युत्पत्तिः कार्या । क्षुभितानि क्षोभं प्राप्तानि अन्यसैन्यानि शत्रुसेनाः येन तथोक्तः सन् । कुञ्जरौघैः गजसमूहैः सह । क्रुधा कोपेन । आपतन्तं योद्धुमागच्छन्तम् । कोनेटि(रि) राजं कोनेटिनामकं नृपम् । जयाब्धिकन्यां जयलक्ष्मीमपि। जन्यभूमौ युद्धभूमौ पितृगृहे च । पाणौ जग्राह करे गृहीतवान्, युद्धे भयेन पलायमानस्य कोनेटिराजस्य हस्तमगृह्णात्; अन्यत्र जयलक्ष्म्याः पाणिग्रहणमकार्षीदित्यर्थः । 'जन्यं हट्टे परीवादे संग्रामे च नपुंसकम् । जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान् । त्रिषूत्पाद्य-जनित्रोश्च नवोढाज्ञातिभृत्ययोः । वरस्निग्धेऽपि' इति विश्वः । **तुल्य-योगिता** ॥

प्रयाणमाशाविजयाय तस्य
प्रायो गृहप्राङ्गणभूविहारः ।
दानान्यहो ~~षोडश विश्रुतानि~~
जातानि दैनंदिनमेव कृत्यम् ॥ ३४ ॥

**प्रयाणमिति** ॥ तस्य नृसिंहराजस्य । आशानां दिशां विजयाय । प्रयाणम् । प्रायः । गृहस्य प्राङ्गणभुवि चत्वरप्रदेशे विहारः लीला, लीला-

सञ्चरणसदृशमित्यर्थः । विश्रुतानि प्रसिद्धानि । षोडश । दानानि । दैनंदिनं दिने दिने भवं, प्रतिदिवसमनुष्ठीयमानमित्यर्थः । कृत्यं कर्म । जातानि । अहो इत्याश्चर्ये । षोडश दानानि च 'भूम्यासनं जलं वस्त्रं प्रदीपोऽन्नं ततः परम् । ताम्बूलच्छत्रगन्धाश्च माल्यं फलमतः परम् । शय्या च पादुका गावः काञ्चनं रजतं तथा ।' इत्युक्तानि ॥

तत्स्वातिवर्षेण तथा बुधानां
पूर्णासु जाताः करशुक्तिकासु ।
मुक्ता यशोमूर्तिजुषो विभूषाः
कण्ठेष्वभूवन्ककुबङ्गनानाम् ॥ ३५ ॥

**तत्स्वेति** ॥ तस्य स्वानां धनानां अतिवर्षः अतिशायितं दानमेव स्वातिवर्षः स्वातीनक्षत्रयुक्तकालोत्पन्ना वृष्टिः तेन । बुधानां विदुषाम् । कराः हस्ता एव शुक्तिकाः मुक्तास्फोटाः तासु । तथा । पूर्णासु सतीषु । जाताः । यशोमूर्तिजुषः कीर्तिरूपधारिण्यः । मुक्ताः मुक्ताफलानि, तत्कीर्तय एव मुक्ताफलानीति भावः । ककुभः दिश एव अङ्गनाः स्त्रियः तासाम् । कण्ठेषु । विभूषाः आभरणानि । अभूवन् । स्वातीवर्षे शुक्तिकासु पतिता अम्बुधाराः मुक्ताफलानि भवन्तीति प्रसिद्धिः । 'स्वात्यां सागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते ।" इति भर्तृहरिसुभाषितम् । ''स्वाती सपत्नी किल तारकाणां मुक्ताफलानां जननीति रोषात् । सा रोहिणी नीलमसूत रत्नं कृतास्पदं गोपवधूकुचेषु ॥' इति श्रीकृष्णकर्णामृतम् । **रूपकं उत्प्रेक्षा च** ॥

गौरित्यटव्यां गवयं प्रकाश्य
पयःप्रदोहं प्रति बाध्यमानाः ।

कूलंकषक्षुत्तरलैः कुमारै-
व्रींडामवापुर्विमतास्तदीयाः ॥ ३६ ॥

**गौरिति** ॥ तदीयाः नृसिंहराजसंबन्धिनः । विमताः शत्रवः । कूलकषया समधिकया क्षुधा बुभुक्षया तरलैः चञ्चलैः दुरवस्थैरित्यर्थः । कुमारैः बालकैः । अटव्यां वने । गवयं गोसदृशं मृगविशेषम् । गौः इति इयं धेनुरिति । प्रकाश्य गवयमानीय प्रकटय्य तं दर्शयित्वेत्यर्थः । पयःप्रदोहं प्रति क्षीरदोहनमुद्दिश्य । बाध्यमानाः मुहुर्मुहुर्निबन्धेन क्लिश्यमानाः सन्तः । व्रीडां लज्जाम् । अवापुः प्राप्तवन्तः । **भ्रान्तिमदलङ्कारः** ॥

प्रयातुमेतत्प्रतिभूपतीनां
प्राणानिलो नाक्षमताहवेषु ।
व्यलम्बतैषां वदनेषु तृण्यां
विलोक्य किं वाहमृगोऽदसीयः ॥ ३७ ॥

**प्रयातुमिति** ॥ आहवेषु युद्धेषु । एतस्य नरसिंहराजस्य ये प्रतिभूपतयः शत्रुराजाः तेषाम् । प्राणानिलः प्राणवायुः । प्रयातु निर्गन्तुम् । न अक्षमत न शक्तोऽभवत् । तत्र हेतुमुत्प्रेक्षते — **व्यलम्बतेति** । अदसीयः अमुष्य वायोः संबन्धी । वाहमृगः वाहनभूतो हरिणः । एषां शत्रुनृपाणाम् । वदनेषु मुखेषु । तृण्यां तृणसमूहम् । विलोक्य । (तल्लोभेन) व्यलम्बत विलम्बमकरोत्किम् । वायोर्वाहनं मृग इति पुराणेषु । अत एव पृषदश्व इति तस्य नाम । तृणदर्शनेन तद्भक्षणाय प्रवृत्तस्य स्ववाहनस्य हरिणस्य विलम्बात् न शत्रुनृपतीनां वदनात्प्राणानिलः प्रचचालेति विशिष्टोत्प्रेक्षा । युद्धेषु तृणमुखानभयार्थिनो नृपतीनयं ररक्षेति तात्पर्यम् । अशक्तानां मुखेन तृणवहनं शरणागतिचिह्नमिति युद्धसंप्रदायः ॥

प्रकाशमानाद्दिशि तत्प्रतापा-
त्प्रायेण लब्ध्वा परिभूतितापम् ।
पतिस्त्विषां पङ्कजकोरकेषु
कालं नयत्येष करं निधाय ॥ ३८ ॥

**प्रकाशमानादिति** ॥ एषः । त्विषां पतिः सूर्यः । दिशि । प्रकाशमानात् दीप्यमानात् । तस्य प्रतापात् कोशदण्डजतेजसः । परिभूत्या पराजयेन जातः यः तापः तम् । लब्ध्वा । (शैत्योपचाराय) पङ्कजकोरकेषु पद्ममुकुलेषु । करं हस्तं किरणं च । निधाय निक्षिप्य । कालम् । प्रायेण । नयति गमयति । **उत्प्रेक्षा** । तद्व्यञ्जकं प्रायेणेति पदम् । एवमन्यत्रापि ॥

वस्वोकसारेव विभोर्वसूनां
बलाभियातेरमरावतीव ।
विद्यापुरी विस्मयभूरमुष्य
विशिष्य राज्ञोऽजनि राजधानी ॥ ३९ ॥

**वस्वोकसारेति** ॥ अमुष्य । राज्ञः । विशिष्य विशेषतः । विस्मयभूः आश्चर्यस्थानम् । विद्यापुरी । वसूनां धनानाम् । विभोः प्रभोः कुबेरस्येत्यर्थः । वस्वोकसारा अलकापुरीव । बलाभियातेः इन्द्रस्य । अमरावतीव । राजधानी । अजनि जाता । जनी प्रादुर्भाव इत्यस्मात्कर्तरि लुङि "दीपजन--" इति चिण् ।

बिलेशयेशं बिसमित्यवेत्य
गृह्णन्ति यत्खेयकृतावगाहाः ।

आलोक्य तन्मौलिमणीनलात-
मोहेन मुञ्चन्ति पुनर्मदेभाः ॥ ४० ॥

**बिलेशयेति** ॥ यस्याः विद्यापुर्याः खेयेषु परिखासु कृतः अवगाहः प्रवेशः यैस्ते तथोक्ताः । मदेभाः मत्तगजाः । बिले शेरत इति बिलेशयाः सर्पाः तेषां ईशं श्रेष्ठम् । बिसं मृणालम् । इति अवेत्य मत्वा । गृह्णन्ति । पुन; पश्चात् । तस्य बिलेशयेशस्य मौलिमणीन् फणारत्नानि । आलोक्य । अलातमोहेन अङ्गारखण्डभ्रमेण । मुञ्चन्ति विसृजन्ति । **भ्रान्तिमान् उदात्तं च** ॥

सुधाभुजो यत्सदनध्वजेषु
स्वैरं नभोलङ्घनजाङ्घिकेषु ।
न जानते नन्दनवल्लरीणा-
मुपघ्नविन्यासभुवः प्रयासान ॥ ४१ ॥

**सुधेति** ॥ यस्याः सदनध्वजेषु गृहकेतुदण्डेषु । स्वैरं स्वेच्छया निष्प्रतिबन्धमित्यर्थः । नभसः आकाशस्य लङ्घने तरणे जाङ्घिकेषु जङ्घालेषु आकाशतरणपर्याप्तेष्वित्यर्थः, आकाशादुपर्यपि सुदूरं गच्छत्स्विति यावत् । सुधाभुजः देवाः । नन्दवल्लरीणां नन्दनोद्यानलतानाम् । उपघ्नानां आश्रयभूतवृक्षाणां विन्यासभुवः स्थापनेन जायमानान् । प्रयासान् । न जानते न विदन्ति । **अतिशयोक्तिः** ॥

कपोलकाषात्करिणो वलारेः
श्लथासु यत्सौधमणिच्छटासु ।

मदाम्बुरेखाजुषि तत्प्रदेशे
मग्ना द्विरेफा मणयो भवन्ति ॥ ४२ ॥

**कपोलेति** ॥ यस्याः सौधानां प्रासादानां मणिच्छटासु रत्नपङ्क्तिषु । वलारेः करिणः ऐरावतस्य । कपोलकाषात् गण्डस्थलघर्षणात् । श्लथासु गलितासु सतीषु । मदाम्बुरेखाजुषि मदजलरेखायुते । तत्प्रदेशे तस्मिन् स्थले । मग्नाः गन्धलोभेन निलीनाः । द्विरेफाः भ्रमराः । मणयः रत्नानि । भवन्ति ॥

सयत्ननिर्यत्नगतिर्गवाक्ष-
मार्गे यदुच्चैर्मणिहर्म्यरुद्धः ।
प्रायेण पक्षद्वितये प्रवृद्धि-
परिक्षयौ निन्दति नन्दतीन्दुः ॥ ४३ ॥

**सयत्नेति** ॥ इन्दुः चन्द्रः । यस्याः उच्चैर्मणिहर्म्यैः उन्नतै रत्नमयैर्धनिनां वासगृहैः रुद्धः गमने प्रतिबद्धः । गवाक्षमार्गे वातायनपथे । सयत्ना शुक्लपक्षे वृद्धेः सप्रयासा निर्यत्ना कृष्णपक्षे ह्रासात् निष्प्रयासा च गतिः गमन यस्य स तथोक्तः सन् । पक्षद्वितये शुक्लकृष्णपक्षयोः । (क्रमेण) प्रवृद्धिपरिक्षयौ पुष्टिह्रासौ । प्रायेण निन्दति । नन्दति च । अत्र सम्भावनामात्रमिति नोत्प्रेक्षा ॥

सौधाग्रकेल्यां यदणूदरीषु
शाखार्पितप्रस्मृतभूषणासु ।
ऐश्वर्यवन्तस्तरवः सुराणा-
मौदार्यमुद्रां ध्रुवमाश्रयन्ते ॥ ४४ ॥

**सौधेति** ॥ यस्यां विद्यमानाः अणूदर्यः कृशोदर्यः स्त्रियः तासु ।

सौधाग्रकेल्यां प्रासादाग्रविहारकाले । शाखासु अर्पितानि लम्बितानि प्रस्मृतानि विस्मृतानि भूषणानि याभिस्तासु तथोक्तासु सतीषु। (तैर्भूषणैः) ऐश्वर्यवन्तः समृद्धिमन्तः। सुराणां तरवः कल्पवृक्षाः । औदार्यमुद्रां दातृत्व-प्रसिद्धिम् । आश्रयन्ते भजन्ति । ध्रुवम् । **उत्प्रेक्षातिशयोक्ती** ॥

**मदावलानां कटमध्यवान्तै-**
**र्मदैर्नदीमातृकतां प्रयाता ।**
**यन्नेतुरुर्वीकमितुर्यशोभि-**
**रशोभि भूराश्रितसस्यलास्या ॥ ४५ ॥**

**मदावलेति** ॥ मदावलानां गजानाम् । कटमध्यवान्तैः गण्डस्थल-मध्यगलितैः । मदैः मदजलैः । नदी माता पोषिका यस्याः सा नदीमातृका तस्या भावः नदीमातृकता तां जलसमृद्धिमित्यर्थः । प्रयाता । भूः भूमिः । आश्रितं सस्यानां लास्यं नर्तनं अभिवृद्धिः यां सा तथोक्ता सती। यन्नेतुः यस्याः नायकस्य । उर्वीकमितुः राज्ञः । यशोभिः कीर्तिभिः। अशोभि शोभिता ॥

**मखावतीर्णेषु महीसुराणां**
**मरुत्सु शून्या नगरी मघोनः ।**
**प्रजासमाजैः परिणाहिलक्ष्म्याः**
**प्रयाति यस्या न समानकक्ष्याम् ॥ ४६ ॥**

**मखेति** । मरुत्सु देवेषु । महीसुराणां ब्राह्मणानाम् । मखावतीर्णेषु यागं प्रत्यागतेषु सत्सु। शून्या जनशून्या। मघोनः पुरी इन्द्रनगरी अमरावती । प्रजासमाजैः प्रजासमूहैः । परिणाहिनी विस्तारवती लक्ष्मीः श्रीः

यस्याः तथोक्तायाः । यस्याः । समानकक्ष्यां सदृशस्थितिं सादृश्यमित्यर्थः । न प्रयाति । **काव्यलिङ्गमतिशयोक्तिश्च** ॥

**उपर्यधः पुष्पफलैरुदग्र-**
**मुद्यानमामोद्य दिवं भुवं च ।**
**आवालवारिण्यनुबिम्बदम्भा-**
**द्रसातलं रञ्जयतीव यस्याम् ॥ ४७ ॥**

**उपरीति** । यस्याम् । उद्यानं आरामः । उपरि उपरिभागे । अधः अधोभागे च । (क्रमेण) पुष्पाणि फलानि च तैः । उदग्रं श्लाघ्यं सत् । दिव स्वर्गम् । भुव भूमि च । आमोद्य वासयित्वा संतोष्य च । आवालवारिणि आलवालजले । अनुबिम्बदम्भात् प्रतिबिम्बव्याजात् । रसातलं पातालम् । रञ्जयति रक्तं करोति सतोषयतीव । पुष्पफलसमृद्धिमन्तोऽप्युन्नताश्च तस्यां पुरि वृक्षा इति भावः । **अपह्नुतिः उत्प्रेक्षा उदात्तं च** ॥

**वियत्तरूणां व्यतिघाट्टितासु**
**शाखाञ्चलैः सौधपताकिकासु ।**
**साधर्म्यभाजा शतमन्युपुर्या-**
**सदण्डलास्येव समीक्ष्यते या ॥ ४८ ॥**

**वियदिति** । या नगरी । सौधपताकिकासु प्रासादध्वजदण्डेषु । वियत्तरूणां कल्पवृक्षाणाम् । शाखाञ्चलैः शाखाग्रैः । व्यतिघट्टितासु संघर्षं प्राप्तासु सतीषु । साधर्म्यभाजा सादृश्यं प्राप्तया । शतमन्युपुर्या इन्द्रनगर्या सह । सदण्डलास्या दण्डलीलासहितेव दण्डादण्डि कुर्वाणेवेत्यर्थः । समीक्ष्यते दृश्यते । **उत्प्रेक्षा** ॥

पूषोत्पलेशावपि पुष्पवन्ता-
वितीव यत्रोपवनी कृतेर्ष्या ।
प्रवर्ध्य चैतद्रिपुमन्तरन्धं
पादार्पणं न क्षमते तदीयम् ॥ ४९ ॥

**पूषेति** ॥ यत्र नगर्याम् । उपवनी उद्यानम् । पूषा सूर्यः उत्पलेशः चन्द्रः तावुभावपि । पुष्पवन्तौ पुष्पसहितौ, पुष्पवच्छब्दवाच्यौ । इति । कृतेर्ष्या ईर्ष्यायुतेव । अन्तः स्वान्तःप्रदेशे । एतयोः सूर्याचन्द्रमसोः रिपुं शत्रुम् । अन्धं तमः । प्रवर्ध्य प्रकर्षेण पोषयित्वा । तदीयं सूर्याचन्द्रमस्संबन्धि । पादार्पणं चरणविन्यासं किरणप्रवेशं च । न क्षमते न सहते । 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ।' 'अन्धं तमस्यपि ।' इत्यमरः ॥

स्पृशत्युदस्तेन विधावुदग्रं
पादेन यत्सौधपितामहाण्डम् ।
समन्ततः कन्दलतीन्दुकान्त-
निष्यन्दसन्दोहनिभाद्द्युसिन्धुः ॥ ५० ॥

**स्पृशतीति** ॥ विधौ चन्द्र एव विष्णौ । उदस्तेन प्रसारितेन ऊर्ध्वोत्क्षिप्तेन च। पादेन किरणेनैव चरणेन। उदग्रं उन्नतम्। यस्याः सौध एव पितामहाण्डं ब्रह्माण्डं तत्। स्पृशति सति । समन्ततः समन्तात् । इन्दुकान्तनिष्यन्दनिभात् चन्द्रकान्तनिष्यन्दव्याजेन । द्युसिन्धुः गङ्गा । कन्दलति प्रस्रवति। **रूपकं अपह्नुतिश्च** ॥

आद्यैरपि क्षोणिपतिप्रकाण्डै-
राकाङ्क्षणीयस्वयशोऽवतारः ।

बसन्स तस्यां वसुधापतीनां
कन्यामणीः काञ्चनपर्यणैषीत् ॥ ५१ ॥

**आद्यैरिति** ॥ आद्यैः क्षोणिपतिप्रकाण्डैः पुरातनैर्नलनहुषरामादिभिर्नृपतिश्रेष्ठैरपि । आकाङ्क्षणीयः स्पृहणीयः स्वयशोऽवतारः निजकीर्तिप्रसरो यस्य स तथोक्तः । सः नृसिंहराजः । तस्यां विद्यापुर्याम् । बसन् सन् । वसुधापतीनां राज्ञाम् । काञ्चन । कन्यामणीः प्रशस्ताः कन्यकाः पर्यणैषीत् परिणीतवान् ।

तिस्रो नृपस्येत्यभवन्नभीष्टा-
स्तिप्पाम्बिका तासु च नागमाम्बा ।
पट्टाभिषिक्ता पतिदेवताना-
मुत्तंसभूषामणिरोबमाम्बा ॥ ५२ ॥

**तिस्र इति** ॥ तासु परिणीतासु राजकन्यकासु । तिप्पाम्बिका नागमाम्बा । पट्टाभिषिक्ता महिषी । पतिरेव देवता यासां तासां पतिदेवतानां पतिव्रतानाम् । उत्तंसभूषामणिः चूडामणिभूता । ओबमाम्बा च । इति तिस्रः । नृपस्य नरसिंहराजस्य । अभीष्टाः प्रियाः । अभवन् ॥

तिप्पाम्बिकायां द्विजसंपदेऽभू-
द्विख्यातिमान्वीरनृसिंहरायः ।
नागाम्बिकायां नरसावनीन्दोः
कीर्त्याकरोऽजायत कृष्णरायः ॥ ५३ ॥

**तिप्पाम्बिकायामिति** ॥ नरसावनीन्दोः नरसिंहराजस्य । द्विजानां ब्राह्मणानां संपदे संपदर्थम् । तिप्पाम्बिकायाम् । विख्यातिमान् प्रसिद्धः ।

वीरनृसिंहरायः । नागाम्बिकायाम् । कीर्त्याकरः यशोनिधिः । कृष्णरायश्च । अजायत जातः ॥

अनन्यसामान्यतया धरायां
दानेन तौ ख्याततरावभूताम् ।
आद्यस्तयोर्दैन्यमुषा द्विजाना-
मन्योऽपि वैगुण्यपुषा परेषाम् ॥ ५४ ॥

**अनन्येति** ॥ तयोः वीरनृसिंहरायकृष्णराययोः । आद्यः वीरनृसिंहरायः । अन्यः कृष्णरायोऽपि । तौ । (क्रमेण) द्विजानाम् । दैन्यं कार्पण्यं मुष्णाति अपनयतीति तेन । दानेन । परेषां शत्रूणाम् । वैगुण्यं विगुणत्व वैकल्यमित्यर्थः, तत् पुष्णातीति तेन दुःखजनकेनेति यावत् । दानेन छेदनेन । ददातेर्द्यतेश्च ल्युटि दानशब्दो निष्पन्नः । अनन्यसामान्यतया असाधारण्येन । धरायां भूमौ । ख्याततरौ अत्यन्तं प्रसिद्धौ । अभूताम् । एतावत्पर्यन्तं प्रायेणोपजातिः । क्वचिदिन्द्रवज्रोपेन्द्रवज्रे अपि ॥

मणिमिव खनिभूर्महीसुराशी-
रभिमतमर्थमिवाम्बुराशिवेला ।
उडुरमणमिवेयमोबमाम्बा
भुवनहिताय बभार गर्भभारम् ॥ ५५ ॥

**मणिमिति** ॥ खनिभूः आकरभूमिः । मणि रत्नमिव । महीसुराशीः ब्राह्मणाशीर्वादः । अभिमतं इष्टम् । अर्थं इव । अम्बुराशेः समुद्रस्य वेला अम्बुविकृतिः । उडुरमणं चन्द्रमिव । इय ओबमाम्बा । भुवनस्य लोकस्य हिताय । गर्भभारम् । बभार धृतवती । **मालोपमा** । पुष्पिताग्रा वृत्तम् ॥

**इति प्रथमः सर्गः ॥**

# द्वितीयः सर्गः ।



शरकाण्डविपाण्डुना मुखेन
स्तनयोरप्युपजातमेचकिम्ना ।
परिणेतृमुदा समं तदासी-
त्प्रकटं दौहृदलक्ष्म पक्ष्मलाक्ष्याः ॥ १ ॥

अथ गर्भचिह्नानि वर्णयति— शरेत्यादिना । तदा । पक्ष्मले अक्षिणी यस्यास्तस्याः पक्ष्मलाक्ष्याः ओबमाम्बायाः । दौहृदलक्ष्म गर्भचिह्नम् । शरकाण्डवत् काशगुच्छवत् विपाण्डुना गौरेण । मुखेन वदनेन । उपजातः मेचकिमा नैल्यं यस्य तेन तथोक्तेन । स्तनयोः कुचयोः । मुखेन अग्रभागेणापि । परिणेतुः नायकस्य । मुदा सन्तोषेण । समं साकम् । प्रकटं व्यक्तम् । आसीत् । **अनुमानम्** ॥

तनयानुपलम्भसंभवो यो
नृपतेरैक्ष्यत नीलिमा मुखेन्दौ ।
कुचयोः स युगेन कोमलाङ्ग्या
मुषितश्चूचुकनीलिमापदेशात् ॥ २ ॥

**तनयेति** ॥ तनयस्य पुत्रस्य अनुपलम्भेन अनुत्पत्त्या सम्भवः यस्य तथोक्तः । यः । नीलिमा श्यामत्वं वैवर्ण्यमिति यावत् । नृपतेः । मुखेन्दौ मुखचन्द्रे । ऐक्ष्यत दृष्टः । सः नीलिमा । कोमलाङ्ग्याः सुकुमारगात्र्याः ओबमाम्बायाः । कुचयोः स्तनयोः । युगेन युग्मेन । चूचुकयोः स्तना-

प्रयोः नीलिम्नः नैल्यस्य अपदेशात् व्याजात् । मुषितः चोरितः । **कैतवापह्नुतिः** ।

उदरस्थितमुत्पलेक्षणायाः
कुलदीपं कुमुदिन्यधीश्वरेण ।
अभिरक्षितुमर्भकं विसृष्टा
रजनीवाजनि रोमराजिरस्याः ॥ ३ ॥

**उदरेति**॥ उत्पलेक्षणायाः इन्दीवराक्ष्याः । अस्याः राज्ञ्याः । रोमराजिः रोमावलिः । उदरस्थितं कुक्षिस्थम् । कुलदीपं वंशप्रदीपकम् । अर्भकं शिशुम् । अभिरक्षितुम् । कुमुदिन्याः अधीश्वरेण चन्द्रेण । विसृष्टा प्रेषिता । रजनी रात्रिरिव । अजनि जाता । **उत्प्रेक्षा** ॥

अवतार इति स्वयं मुरारे-
रुदरस्थः शिशुरुत्पलेक्षणायाः ।
वलिवैभववञ्चनानुकूलं
वपुषा वृद्धिजुषा विभाव्यते स्म ॥ ४ ॥

**अवतार इति** ॥ उत्पलेक्षणायाः । उदरस्थः । शिशुः । वलीनां त्रिवल्याः वैभवस्य गुरुत्वस्य प्रकटदर्शनस्येति यावत् , वञ्चनायाः प्रतारणायाः तदपनयनस्येत्यर्थः ; अनुकूलं अनुगुणं यथा तथा । पक्षे वबयोरभेदात् बलेः विरोचनसुतस्य दानवस्य यत् वैभवं महिमा तस्य वञ्चनायाः प्रतारणायाः तदपनोदनस्येत्यर्थः, अनुकूलं यथा तथा । वृद्धिं जुषते भजते इति तेन । वपुषा शरीरेण । स्वयं आत्मना । मुरारेः विष्णोः । अवतारः त्रिविक्रमावतारः । इति । विभाव्यते स्म अमन्यत । **काव्यलिङ्गम्** ॥

कुचकोकमुखे विधाय कार्ष्ण्यं
सुदृशः श्वेतिमकौमुदीं तथाङ्गे ।
नियतं कुलनेतुरन्वकार्षी-
ज्जठरस्थो जगदीशसूनुरिन्दोः ॥ ५ ॥

**कुचेति** ॥ जठरस्थः उदरस्थितः । जगदीशसूनुः राजकुमारः । कुचौ स्तनावेव कोकौ चक्रवाकौ तयोः मुखं अग्रभाग एव वदनं तस्मिन् । कार्ष्ण्यं नैल्यमेव दुःखजनितं वैवर्ण्यम् । विधाय कृत्वा । तथा । सुदृशः ओबमाम्बायाः । अङ्गे । श्वेतिमा धावल्यमेव कौमुदी चन्द्रिका ताम् । विधाय । कुलनेतुः वंशनायकस्य कुलकूटस्थस्येत्यर्थः । इन्दोः । नियतं ध्रुवम् । अन्वकार्षीत् अनुकरोति स्म । अनुकरोतेः प्रयोगे कर्मणि षष्ठी-करणं महाकविशैली । यथा 'अनुकरोति भगवतो नारायणस्य' इति कादम्बरी । **उपमा** ॥

प्रसमीक्ष्य पयोधरं मृगाक्ष्या
मुखतः श्यामलिमानमश्नुवानम् ।
अपि गर्भघनोदये व्यलासी-
दजहत्प्रीतिरहो स राजहंसः ॥ ६ ॥

**प्रसमीक्ष्येति** ॥ सः । राजहंसः राजश्रेष्ठो नरसिंहभूपतिरेव हंस-विशेषः । गर्भस्य घनः सान्द्रः यः उदयः अभिवृद्धिः स एव घनोदयः मेघाविर्भावसमयः वर्षाकाल इति यावत्, तस्मिन्नपि । मुखतः अग्र-भागे । श्यामलिमानं नैल्यम् । अश्नुवानं आप्नुवन्तम् । पयोधरं कुच-मेव मेघम् । प्रसमीक्ष्य विलोक्य । अजहती अत्यजन्ती प्रीतिः यं स

तथोक्तः सन्। व्यलासीत् विलसति स्म । अहो इत्याश्चर्ये । हंसस्य घनोदये प्रीत्याविर्भावो विस्मयस्थानमिति भावः । **रूपकं विरोधाभासश्च** ॥

मुहुरुच्छ्वसितं मुखेन तन्व्या
नयनाभ्यां सह नर्तितप्रसादम् ।
अवलग्नमिवान्तरङ्गमासी-
दवनीपालशिखामणेरशून्यम् ॥ ७ ॥

**मुहुरिति** ॥ अवनीपालशिखामणेः राजचूडामणेर्नरसिंहराजस्य । अन्तरङ्गं मनः । तन्व्याः ओबमाम्बायाः । मुखेन ( सह ) उच्छ्वसित उच्छ्वाससहितम् । आसीत् । मुखस्य उच्छ्वासः निश्वासः । हृदयस्य तु उच्छ्वासः समाश्वासः संतोष इति यावत् । नयनाभ्यां तस्याः नेत्राभ्यां सह । नर्तितः अभिवृद्धः प्रसादः प्रसन्नता दुःखकालुष्याभावः अन्यत्र धावल्यं यस्य तत्तथोक्तम् । आसीत् । (तथा) अवलग्नं तस्याः मध्यमिव । अशून्यं वैकल्यरहित तत्तत्कार्यविचारचतुर पक्षे पुष्टं च । आसीत् । **सहोक्तिः उपमा च ।**

उदभूज्जगदद्भुतादयाना-
मुचितो गर्भमुपेयुषोऽर्भकस्य ।
महितो भुजधामविभ्रमाणां
महिलारत्नमनोरथप्रचारः ॥ ८ ॥

**उदभूदिति** ॥ जगति लोके अद्भुतानां आश्चर्याणां उदयाः उत्पत्तयः तेषाम । उचितः अनुगुणः । गर्भम् । उपेयुषः प्राप्तवतः । **अर्भकस्य** शिशोः । भुजयोः यत् धाम तेजः तस्य विभ्रमाणां विलासानाम् । **महितः**

पूजितः तैः पूजितः तदनुरूप इति यावत्। यद्वा जगदद्भुतोदयानां भुजधामविश्रमाणां उचितः। महितः श्रेष्ठः। महिलारत्नस्य स्त्रीरत्नस्य ओबमाम्बायाः मनोरथस्य दोहदस्य प्रचारः प्रसारः। उदभूत् उत्पन्नः।

सुदती महतीषु सिन्धुमुक्ता-
स्वनवाप्यादरमाहवाजिरेषु ।
कमितुः करवालखण्डितानां
करिणां कुम्भमणीगणानकाङ्क्षीत् ॥ ९ ॥

**सुदतीति** ॥ शोभनाः दन्ताः यस्याः सा सुदती राज्ञी। महतीषु श्रेष्ठासु। सिन्धोः समुद्रात् आनीताः याः मुक्ताः मुक्ताफलानि तासु। आदर प्रीतिम्। अनवाप्य अलब्ध्वा। आहवाजिरेषु युद्धाङ्गणेषु। कमितुः भर्तुः। करवालेन खड्गेन खण्डितानां मस्तकस्थले दारितानाम्। करिणां गजानाम्। कुम्भेषु शिरःसु विद्यमानाः याः मण्यः मौक्तिकानि तेषां गणान समूहान्। अकाङ्क्षीत् अभिललाष ॥

ललनाव्यजनानिलैर्न किञ्चि-
च्चकमे सौधगता श्रमं विनेतुम्।
अलमैहत कन्धराधिरूढा
श्रवणोपान्तसमीरणैः करेणोः ॥ १० ॥

**ललनेति** ॥ (सा) सौधगता प्रासादमारूढा सती। श्रमं तदारोहणजन्यं परिश्रमं तदुद्भूतं स्वेदसलिलमिति यावत्। ललनाभिः परिचारिकाभिः स्त्रीभिः वीज्यमानानां व्यजनानां तालवृन्तानां अनिलैः वातैः। विनेतुं अपनोदयितुम्। किंचित् ईषदपि। न चकमे न

इच्छति स्म। (किंतु) कन्धरां करेणोर्ग्रीवां तत्पृष्ठमित्यर्थः, अधिरूढा अधिष्ठिता सती। करेणोः गजवध्वाः। श्रवणोपान्ताभ्यां कर्णाञ्चलाभ्यां जायमानैः समीरणैः वायुभिः। श्रमं अपनेतुम्। अलं अत्यर्थम्। ऐहत अभ्यलष्यत्॥

पदमर्पयितुं नच प्रसून-
प्रकरेष्वीषदपि प्रगल्भमाना।
महिषी भृशकर्कशेषु चूडा-
मणिषु द्वेषिमृगीदृशामियेष ॥ ११ ॥

**पदमिति** ॥ प्रसूनप्रकरेषु कुसुमोच्चयेषु (अपि) पदं चरणम्। अर्पयितुं विन्यसितुम्। ईषदपि किंचिदपि। न च प्रगल्भमाना न शक्नुवती। महिषी पट्टाभिषिक्ता ओबमाम्बा। भृशकर्कशेषु नितान्तकठिनेषु। द्वेषिमृगीदृशां शत्रुस्त्रीणाम्। चूडामणिषु शिरोरत्नेषु। पदं अर्पयितुम्। इयेष वाञ्छति स्म॥

मुकुरेऽभिमुखीकृते सखीभि-
र्मुखमालोकि न मुद्रितेन्दुगर्वम्।
विमतैणदृशां विनीतवाचां
विपुलाक्ष्या विमले कपोल एव ॥ १२ ॥

**मुकुर इति** ॥ विपुलाक्ष्या विशालनयनया राज्ञ्या। मुद्रितः नियमितः निरस्त इत्यर्थः, तादृशः इन्दुगर्वः चन्द्रमदः येन तादृशम्। मुखम्। सखीभिः। अभिमुखीकृते पुरतो धृते। मुकुरे दर्पणे। न आलोकि न दृष्टम्। (किंतु) विनीता विनयसम्पन्ना वाक् यासां तासां तथोक्तानाम्। विमतैणदृशां रिपुस्त्रीणाम्। विमले निर्मले। कपोले गण्डस्थल एव। आलोकि वीक्षितं वीक्षितुमभिलषितमिति वा॥

अवधीर्य नदीरतिप्रसन्ना
हरिणाक्ष्या मुहुरालुलोकिषासीत् ।
परिपन्थ्यबलाश्रुवाहिनीषु
प्रथमानाञ्जनयोगपङ्किलासु ॥ १३ ॥

**अवधीर्येति** ॥ अतिप्रसन्नाः अत्यन्तस्वच्छाः । नदीः । अवधीर्य तिरस्कृत्य विहायेत्यर्थः । प्रथमानेन वर्द्धमानेन समधिकेन अञ्जनयोगेन कज्जलसंपर्केण पङ्किलासु कलुषासु । परिपन्थिनां शत्रूणां अबलानां स्त्रीणां अश्रुवाहिनीषु नयनजलनदीषु विषये । हरिणाक्ष्याः राजमहिष्याः । मुहुः । आलुलोकिषा आलोकितुमिच्छा । आसीत् ॥

कदली ललितोरुकाण्डसाम्ये
जनयामास न जातु सौमनस्यम्
अदसीयविखण्डनैकशौण्डा
करिशुण्डेव नृसिंहकम्बुकण्ठ्याः ॥ १४ ॥

**कदलीति** ॥ कम्बुः शङ्ख इव कण्ठः यस्याः सा कम्बुकण्ठी नृसिंहस्य कम्बुकण्ठी स्त्री तस्याः । ऊरुकाण्डसाम्ये ऊरुदण्डसादृश्यविषये । ललिता मनोहरा । कदली रम्भा । सौमनस्य प्रीतिम् । जातु कदाचिदपि । न जनयामास न उत्पादितवती । (परं तु) अदसीयविखण्डनैकशौण्डा कदलीसंबन्धि ( कदलीकर्मक ) भञ्जनविषये मत्ता तादृशभञ्जनेन विख्याता वा । करिशुण्डा गजहस्त एव । सौमनस्यं जनयामास ॥

अपहाय सुमानि हासपात्रा-
ण्यपि पादाब्जलताडनास्पदानि ।

प्रमदं परमाणुमध्यमायाः
सुदतीगीतिसुधोचितानि तेनुः ॥ १५ ॥

**अपहायेति** ॥ परमाणुवत् अतिसूक्ष्म मध्यम मध्यं यस्यास्तथा-क्तायाः राज्याः । हासस्य स्मितस्य पात्राणि गोचरभूतानि स्मितेन विकास्यमानानीत्यर्थः, परिहासपात्राणि च । सुमानि चम्पककुसुमानि । (तथा) पादाञ्चलेन पादाग्रेण यत् ताडनं तस्य आस्पदानि विषयान् स्त्रीणा पादाघातेन पुष्प्यन्तीत्यर्थः, तिरस्कार्याणीति च । सुमानि अशोकपुष्पाण्यपि । अपहाय परित्यज्य । सुदतीनां स्त्रीणां गीतिसुधया गानामृतेन उचितानि परिचितानि गीतिसुधायाः उचितानि अनुगुणानीति वा, गानेन विकसन्तीत्यर्थः ; उपचारार्हाणि चेति गम्यते । सुमानि नमेरुकुसुमान्येव । प्रमद संतापम् । तेनुः चक्रुः । अपहाय विद्यमानानीति योजनया ल्यबुपपत्तिः । महाकविप्रयोगाणामेव बहुश उपलम्भात् समानकर्तृकत्व प्रायिकमिति बहवः । 'स्त्रीणां स्पर्शात्प्रियङ्गुर्विकसति बकुलः शीधुगण्डूषसेकात्पादाघातादशोकस्तिलककुरवकौ वीक्षणालिङ्गनाभ्याम् । मन्दारो नर्मवाक्यात्पटुमृदुहसनाच्चम्पको वक्त्रवाताच्चूतो गीतान्नमेरुर्विकसति च पुरो नर्तनात्कर्णिकारः ॥'

अथ पुंसवनादिकं यथाव-
द्विहितं कर्म विशामधीश्वरेण ।
तनयस्य तदीयगर्भभाजो
विभवस्येव नयो विवृद्धयेऽभूत् ॥ १६ ॥

**अथेति** ॥ अथ अनन्तरम । विशां अधीश्वरेण जनाधिपेन नृसिंहराजेन । यथावत् यथाशास्त्रम् । अर्हार्थे वतिः । विहितं अनुष्ठितम् ।

पुंसवनादिकं पुमान् सूयतेऽनेनेति पुंसवनं नाम कश्चन संस्कारः, तत्प्रभृति । कर्म । तदीयगर्भभाजः ओबमाम्बागर्भजुषः । तनयस्य सूनोः । नयः नीतिः । विभवस्य ऐश्वर्यस्येव । विवृद्धये अभ्युदयाय । अभूत् । **उपमा** ॥

अथ वैजनने दिने शुभंयौ
हरिणाक्षी नृपतेरसूत सूनुम् ।
वसुधातिभरापनोदहेतुं
वसुदेवप्रमदेव वासुदेवम् ॥ १७ ॥

**अथेति** ॥ अथ पश्चात् । वैजनने सूतिमासे । शुभं अस्यास्तीति शुभंयु तस्मिन् । दिने । नृपतेः हरिणाक्षी राज्ञी । वसुधायाः भूमेः यः अतिभरः अधिको भारः तस्य अपनोदस्य अपनयनस्य हेतुं कारणभूतम् । सूनुं पुत्रम् । वसुदेवप्रमदा देवकी । (तादृशं) वासुदेवं कृष्णमिव । असूत प्रसूतवती । **उपमा** ॥

सुदृशामजनिष्ट सूतिगेहे
सुतजन्मोत्सवसूचनो निनादः ।
उदयत्युडुबान्धवे किमब्धे-
र्धृतमौखर्यविपर्यया लहर्यः ॥ १८ ॥

**सुदृशामिति** । सूतिगेहे प्रसवगृहे । सुदृशां स्त्रीणाम् । सुतजन्मोत्सवसूचनः पुत्रोत्पत्तिमङ्गलसूचकः । निनादः कलकलः । अजनिष्ट जातः । उडुबान्धवे चन्द्रे । उदयति उदयमाने सति । अब्धेः समुद्रस्य । लहर्यः वीचयः । धृतः मौखर्यस्य मुखरतायाः कोलाहलस्येत्यर्थः विपर्ययः अभावः

याभिस्तास्तथोक्ताः । (भवन्ति) किम् । न भवन्त्येवेत्यर्थः । **दृष्टान्तालङ्कारः** ॥

**अवनीरमणैर्वितीर्णमाद्यै-**
**रगमत्प्राक्तनतां यशोदुकूलम् ।**
**तदिदं नवमेष दास्यतीति**
**प्रमदेनेव दिशो दश प्रसेदुः ॥ १९ ॥**

**अवनीति** ॥ आद्यैः अवनीरमणैः प्राक्तनै राजभिः । वितीर्णं दत्तम् । यशः कीर्तिरेव दुकूलं क्षौमम् । प्राक्तनतां जीर्णताम् । अगमत् गतम् । एषः उत्पन्नः कुमारः । नवं नूतनम् । तदिदं यशोदुकूलम् । दास्यति । इति । प्रमदेन संतोषेणेव । दश दिशः । प्रसेदुः प्रसन्ना बभूवुः । **उत्प्रेक्षा** ॥

**अपनीतरजःकणानुषङ्गाः**
**परितोषाश्रुभरैरिव प्रजानाम् ।**
**मरुतो व्यवलन्त मन्दमन्दं**
**नवगन्धोदयनर्तितद्विरेफाः ॥ २० ॥**

**अपनीतेति** ॥ मरुतः वाताः । प्रजानाम् । परितोषाश्रुभरैः आनन्दबाष्पप्रवाहैरिव । अपनीतः निरस्तः रजःकणानुषङ्गः धूलीकणसंबन्धः येषां ते तथोक्ताः । नवः नूतनः अनाघ्रात इत्यर्थः, तादृशः यः गन्धः परिमलः तस्य उदयेन प्रसारणेन नर्तिताः मादिताः तोषिता वा द्विरेफाः भ्रमराः यैस्ते तथोक्ताश्च सन्तः । मन्दमन्दम् । व्यवलन्त वान्ति स्म । **उत्प्रेक्षा** ॥

**नरपालकनन्दनो रिपूणां**
**नगरीरेष गरीयसीर्बितीर्य ।**

परितोषयिता ममेति नूनं
प्रननर्त ज्वलनः प्रदक्षिणार्चिः ॥ २१ ॥

**नरेति** ॥ एषः नरपालकनन्दनः राजकुमारः । गरीयसीः बृहत्तराः । रिपूणां शत्रूणाम् । नगरीः पुराणि । वितीर्य प्रदाय । मम । परिपोषयिता परिपोषकः । (भविष्यति) इति । ज्वलनः अग्निः । प्रदक्षिणाः अर्चिषः शिखाः यस्य स तथोक्तः सन् । प्रननर्त जजृम्भे । नूनं ध्रुवम् ॥

अचिरेण दिशाममुष्य जेतुः
कमलां कल्पितविभ्रमां कटाक्षे ।
अपि कल्पतरुं करेऽक्षिलक्ष्यं
करवाणीति किमम्बुधिर्जजृम्भे ॥ २२ ॥

**अचिरेणेति** ॥ अचिरेण अविलम्बम् । दिशां विजेतुः दिग्विजयं कुर्वाणस्य । अमुष्य राजकुमारस्य । कटाक्षे नेत्रान्ते । कमलां लक्ष्मीम् । कल्पितः कृतः विभ्रमः विलासः यया तां तथोक्ताम् । करे हस्ते । कल्पतरुं कल्पवृक्षमपि । अक्षिलक्ष्यं दृश्यम् । करवाणि कुर्याम् । इति । अम्बुधिः समुद्रः । जजृम्भे जृम्भते स्म किम् । एतावता कल्पवृक्षः केवलं श्रुतः, दानशौण्डस्य तदीयहस्तस्य दर्शनं तु साक्षात्कल्पतरुविलोकनमेवेति भावः । तथाचोच्यते 'त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम् ।' इति ॥

निखिलोऽपि परिष्क्रियाकलापो
जगृहेऽन्तःपुरचारिणा जनेन ।
तनयोदयशंसिना तदानीं
पुलकाः पुस्फुरुरस्य भूषणानि ॥ २३ ॥

**निखिल इति** ॥ तदानीम् । तनयोदयशंसिना पुत्रोत्पत्तिनिवेदकेन । अन्तःपुरे चरितुं शीलमस्येति तेन जनेन । निखिलः समस्तः । परिष्क्रियाकलापः आभरणसमूहः । जगृहे गृहीतः । भूषणानि । अस्य परिग्रहीतुर्जनस्य । पुलकाः रोमाञ्चाः (इव) पुस्फुरुः स्फुरन्ति स्म । **उत्प्रेक्षा** ॥

अधिगम्य गिरामतीतमूल्यां
श्रुतिभूषां सुतजन्मसूचकस्य ।
प्रवितीर्णपरिष्क्रियाविशेषो-
ऽप्ययमात्मानममन्यताधमर्णम ॥ २४ ॥

**अधिगम्येति** ॥ अयं राजा । सुतजन्मसूचकस्य तनयोत्पत्तिनिवेदकस्य जनस्य । गिरां वाचमेव । वाचादिशब्दवत् टावन्तो गिराशब्दः । 'गीर्भणितिर्गिरा ।' इति त्रिकाण्डशेषः । 'तां गिरां करुणां श्रुत्वा' इति प्रयोगश्च । अतीतमूल्यां मूल्यातीतां अमूल्यामित्यर्थः । श्रुतिभूषां कर्णाभरणम् । अधिगम्य लब्ध्वा । प्रवितीर्णः दत्तः परिष्क्रियाविशेषः आभरणातिशयो येन स तथोक्तः सन्नपि । आत्मानम् । अधमं ऋणं यस्य सः अधमर्णः ऋणधारी तम् । अमन्यत मेने । सर्वाभरणदानमपि पुत्रोत्पत्तिसूचनाया अपर्याप्तमेवायममनुतेति भावः ॥

विहितस्नपनो विशामधीशो
वसने हंसविचित्रिते वसानः ।
अवलोकितुमर्भकं प्रमोदा-
दवकृष्टः प्रययावरिष्टगेहम् ॥ २५ ॥

**विहितेति** ॥ विशां अधीशः राजा । विहितं कृतं स्नपनं स्नान येन

स तथोक्तः । णिजर्थोऽत्राविवक्षितः । यद्वा विहितं स्नपनं यस्मै सः । हंसेन हंसाकारेण चिह्नेन विचित्रिते विचित्रे । वसने वस्त्रे । वसानः धारयन् । अर्भकं शिशुम् । अवलोकितुं वीक्षितुम् । प्रमोदात् संतोषेण । अवकृष्टः आकृष्टः सन् । अरिष्टगेहं सूतिकागृहम् । प्रययौ यातः ॥

**अमुमर्भकमङ्कसीम्नि धात्र्याः**
**शयितं सातिशयश्रियं स पश्यन् ।**
**विभवेन बिडौजसोऽनुकुर्व-**
**न्नपि नेत्रैरनुकर्तुमादृतोऽभूत् ॥ २६ ॥**

**अमुमिति** ॥ विभवेन ऐश्वर्येण । बिडौजसः इन्द्रस्य इन्द्रमित्यर्थः । अनुकुर्वन् अनुसरन् तत्सदृश इत्यर्थः । सः नृसिंहराजः । धात्र्याः उपमातुः । अङ्कसीम्नि उत्सङ्गप्रदेशे । शयितं शयानम् । सातिशया सविशेषा श्रीः शोभा यस्य स तथोक्तम् । अमुम् । अर्भकम् । पश्यन् विलोकयन् । नेत्रैः नयनैरपि । (बिडौजसः) अनुकर्तुम् । आदृतः आदरवान् । अभूत् । निर्निमेषमर्भकमपश्यदित्यर्थः ॥

**परिवर्ध्य स जातकर्मणा तं**
**परिणेता धरणेः प्रमोदमानः ।**
**वसुधाविबुधान्वसुप्रकर्षै-**
**र्बहुधानन्दधुरन्धराननतानीन् ॥ २७ ॥**

**परिवर्ध्येति** ॥ धरणेः भूमेः । परिणेता नायकः राजा । प्रमोदमानः संतुष्यन् । तं अर्भकम् । जातकर्मणा जातकर्माख्येन संस्कारेण । परिवर्ध्य परिपोष्य, जातकर्मसंस्कारः शिशोरायुष्कर इति भावः । वसुधाविबुधान्

ब्राह्मणान् । वसुप्रकर्षैः धनसमृद्धिभिः । आनन्दधुरंधरान् आनन्दभारवाहिनः । अतानीत् अकरोत् ॥ २७ ॥

चरणेन समेत्य शङ्खपद्मौ
मकराङ्केन मनीषिणां निधाने ।
उदिते तनये तदा पितॄणा-
मृणमुर्वीरमणस्य रीणमासीत् ॥ २८ ॥

**चरणेनेति** ॥ शङ्खपद्मौ शङ्खपद्माकारौ रेखाविशेषौ, निधिविशेषौ च । समेत्य प्राप्य ( स्थितेन ) मकरः मीनविशेषः तदाकारा रेखा कश्चन निधिश्च अङ्कः चिह्नं यस्य तेन तथोक्तेन । चरणेन । ( उपलक्षिते ) मनीषिणां विदुषाम् । निधाने निधौ निधिसदृश इत्यर्थः । तनये पुत्रे । उदिते उत्पन्ने सति । तदा । उर्वीरमणस्य राज्ञः । पितॄणां ऋणं पितृविषयकं ऋणम् । रीणं शून्यम् । आसीत् । पुत्रजननेन पितृऋणान्मुक्तोऽभूदित्यर्थः । 'ऋणं देवस्य यागेन ऋषीणां दानकर्मणा । सन्तत्या पितृलोकानां शोधयित्वा परिव्रजेत् ।' **श्लेषः परिकरः काव्यलिङ्गं च** ॥

कमलाकरपीडनक्षमेऽस्मि-
न्नुदिते राजशिशौ मुदे जगत्याः ।
शिथिलाजनि सागसां नृपाणां
चिरकारासदनान्धकारपीडा ॥ २९ ॥

**कमलेति** ॥ कमलायाः लक्ष्म्याः करपीडनं विवाहः स्वीकरणमिति यावत् तस्य क्षमे योग्ये, कमलाकरस्य पद्मसरसः पीडनं उपद्रवः तत्र क्षमे शक्ते च । अस्मिन् । राजशिशौ राजकुमारे, बालचन्द्रे च । 'राजा

स्यान्नृपतौ चन्द्रे' इति रभसः । जगत्याः लोकस्य । मुदे सन्तोषाय । उदिते उदयमापन्ने सति । सागसां अपराधिनाम् । नृपाणां राज्ञाम् । चिरं बह्वोः कालात् या कारासदने कारागृहे अन्धकारेण तमसा जाता पीडा उपद्रवः सा । शिथिला गलिता । अजनि जाता । राज्ञामभ्युदय-काले बन्धनस्था मुच्यन्ते इति समुदाचारः ॥

न परं प्रभया नरेन्द्रसूनो-
रभिभूतार्चिररिष्टदीपिकासीन् ।
परिपन्थिवसुन्धरापतीनां
हरिदन्तेष्वपि च प्रतापदीपः ॥ ३० ॥

**नेति** ॥ नरेन्द्रसूनोः राजकुमारस्य । प्रभया कान्त्या । अरिष्टे सूतिकागृहे विद्यमाना दीपिका दीपः केवलम् । अभिभूताः तिरस्कृताः अर्चिषः यस्याः सा तथोक्ता । नासीत् । (परं तु) हरिदन्तेषु दिगन्तेषु । परिपन्थिवसुन्धरापतीनां शत्रुनृपतीनाम् । प्रतापदीपः प्रतापात्मको दीपोऽपि । अभिभूतार्चिः आसीत् ॥

मणिमञ्चसमञ्चितोऽथ धात्र्या
मधुरालोलिकयाजनिष्ट हृष्टः ।
निनदैरिव निम्नगालहर्याः
कलहंसः कमलान्तरालशायी ॥ ३१ ॥

**मणीति** ॥ मणिमञ्चे रत्नपर्यङ्के समञ्चितः शोभितः तत्र शयान इत्यर्थः । सः राजकुमारः । धात्र्याः उपमातुः । मधुरया मनोहरया आलोलिकया बालस्वापनोपयोगिगीतिकया । मधुरालापिकयेति पाठे तु

तद्विशेषणम् । निम्नगालहर्याः नदीतरङ्गस्य । निनदैः शब्दैः कमलान्तराल-शायी पद्ममध्ये शयानः । कलहंस इव । हृष्टः सन्तुष्टः । अजनिष्ट । जातः ॥

नयतो न कदाचन च्युतः स्या-
दवतीर्णः स्वयमच्युतोऽयमुर्व्याम् ।
इति शोभनलक्षणैः स जान-
न्नकरोदात्मजमच्युताभिधानम् ॥ ३२ ॥

**नयत इति** ॥ अय कुमारः । नयतः नीतितः । कदाचन कदापि । च्युतः भ्रष्टः । न स्यात् । अयम् । उर्व्यां भूमौ । स्वयम् । अवतीर्णः । अच्युतः विष्णुरेव । इति । शोभनलक्षणैः शुभनिमित्तैः । जानन् विदन् । सः नरसिंहराजः । आत्मजं पुत्रम् । अच्युताभिधान अच्युतनामानम् । अकरोत् ॥

अधिमञ्चमनुक्षणं जिघृक्षुः
कुरुविन्दस्तवकं कुतूहलेन ।
समनह्यदयं यथोदयाद्रे-
स्तटशायी तपनं मृगेन्द्रशावः ॥ ३३ ॥

**अधीति** ॥ अयं अर्भकः । अधिमञ्चं मञ्चे । कुतूहलेन अभिलाष चापलेन । कुरुविन्दस्तबकं माणिक्यगुच्छम् । उदयाद्रेः उदयपर्वतस्य । तटशायी कटके शयानः । मृगेन्द्रशावः सिंहशिशुः । तपनं यथा सूर्यमिव । अनुक्षणं क्षणे क्षणे । जिघृक्षुः ग्रहीतुमिच्छुः । समनह्यत् उत्साहवानभूत् ।

उदयारुणमूर्तिरोषधीशो
नियतं वंशभुवो नृसिंहसूनोः ।

व्यरुचद्व्यपदिश्य रत्नगुच्छं
शयनस्योपरि सन्ततावनाय ॥ ३४ ॥

**उदयेति** ॥ उदये अरुणा रक्ता मूर्तिः यस्य स तादृशः । ओषधीशः चन्द्रः । वशभुवः स्ववशजातस्य । नृसिंहसूनोः नरसिंहपुत्रस्य । सन्तता वनाय सततरक्षणाय । शयनस्य उपरि मञ्चोपरिभागे । रत्नगुच्छं रत्नस्तबकम् । व्यपदिश्य व्याजीकृत्य तद्व्याजेनेत्यर्थः । व्यरुचत् अशोभत । नियतं निश्चितम् । रोचते द्युतादित्वात् 'द्युद्भ्यो लुङि' इति परस्मैपदे 'पुषादि—' इति सूत्रेण अङ् ॥

वलमानललन्तिकाविभूषा-
वहमानद्युतिवर्धिताभिरूप्यम् ।
अवलीढसुधांशुलीलमासी-
दनिदानस्मितमाननं तदीयम् ॥ ३५ ॥

**वलमानेति** ॥ वलमाना चलन्ती या ललन्तिकाविभूषा किंचिल्लम्बमानं कण्ठाभरणं तस्याः वहमानया प्रसरन्त्या द्युत्या कान्त्या वर्धितं आभिरूप्यं रम्यत्वं यस्य तत् तथोक्तम् । अनिदानं अनिमित्तं स्मितं यस्य तत् । तदीयं पुत्रसम्बन्धि । आननं मुखम् । अवलीढा प्राप्ता सुधांशुलीला इन्दुविलासः येन तत् तादृशम् । चन्द्रसदृशमित्यर्थः । आसीत् ।

अवलम्बतया स्थितोऽपि धात्र्याः
करमालम्ब्य स कानिचित्पदानि ।
मणिनूपुरशिञ्जितेन किंचि-
त्कृतसंख्यानि किलाङ्कणे व्यतानीत् ॥ ३६ ॥

**अवलम्बतयेति** ॥ सः राजकुमारः । धात्र्याः भूमेः । अवलम्बतया आधारतया । स्थितः सन्नपि । धात्र्याः उपमातुः । करं हस्तम् । अवलम्ब्य अवष्टभ्य । मणिनूपुरशिञ्जितेन रत्नमयपादाङ्गदशब्देन । कृता गणिता संख्या येषां तानि, नूपुरध्वनिसंख्यया पादविन्याससंख्या अनुमीयत इति भावः । कानिचित् । पदानि चरणविन्यासान् । अङ्कणे अजिरे । किंचित् शनैः शनैः । व्यतानीत् अकरोत् किल । **स्वभावोक्तिः** ॥

**किमपि क्षितिपात्मजे विवक्षौ**
**विमतानां विरराम वीरवादः ।**
**सदनाङ्कणसीम्नि संचरिष्णौ**
**चलितुं दिक्षु यशः शशाक नैषाम् ॥ ३७ ॥**

**किमपीति** ॥ क्षितिपात्मजे राजकुमारे । किमपि अविस्पष्टवर्णमर्धोच्चारितं च किंचित् । विवक्षौ वक्तुमिच्छति सति । विमतानां शत्रूणाम् । वीरवादः वय वीरा इत्येवमहंकारकोलाहलः । विरराम शान्तः । (क्षितिपात्मजे) सदनाङ्कणसीम्नि गृहचत्वरप्रदेशे । सञ्चरिष्णौ सञ्चरणशीले । एषां विमतानाम् । यशः । दिक्षु । चलितुं गन्तुम् । न शशाक शक्तं नाभूत् ॥

**अजनिष्ट यदाधिवेश्म लौल्या-**
**न्मणिदीपग्रहणं महीशसूनोः ।**
**परिशीलनमेव पर्यणंसी-**
**त्तदहो वैरिमहोहठात्क्रियायाः ॥ ३८ ॥**

**अजनिष्टेति** ॥ अधिवेश्म गृहे । महीशसूनोः राजकुमारस्य । लौल्यात् बालचापलात् । मणिदीपस्य ग्रहणम् । अजनिष्ट जातम् । (इति) यदा इति यत् । अव्ययानामनेकार्थत्वादत्रैवमर्थः । यद्वा

यदा यस्मिन्काले इति व्याख्याय उत्तरवाक्ये तदा इत्यध्याहारेण व्याख्येयम् । तत् मणिदीपग्रहणमेव । वैरिणां शत्रूणां महसः तेजसः हठात्क्रियायाः बलादपहरणस्य । परिशीलनं अभ्यासः । पर्यणंसीत् परिणमति स्म ॥

अवलम्ब्य शनैः सचङ्क्रमोऽभू-
दवरोधप्रमदाङ्गुलीदलानि ।
पवमानशिशुः प्रतानिनीनां
परिगृह्णन्निव बालपल्लवानि ॥ ३९ ॥

**अवलम्ब्येति** ॥ सः । अवरोधप्रमदानां अन्तःपुरस्त्रीणां अङ्गुलीदलानि पत्रतुल्याः करशाखाः । अवलम्ब्य । प्रतानिनीनां लतानाम् । बालपल्लवानि नवकिसलयानि । परिगृह्णन् अवलम्बमानः । पवमानशिशुः वातपोत इव । शनैः मन्दमन्दम् । चंक्रमेण गमनेन सहितः सचंक्रमः । अभूत् ॥

बहुशो यदशोभि रत्नभित्तौ
नृपडिम्भप्रतिबिम्बसंप्रदायः ।
परितो विमतान्भविष्यदात्म-
स्फुरणानां निरणायि पूर्वरङ्गः ॥ ४० ॥

**बहुश इति** ॥ रत्नभित्तौ मणिकुड्ये । नृपडिम्भस्य राजकुमारस्य प्रतिबिम्बानां संप्रदायः परम्परा । गुरुशिष्यपरंपरावतीर्णसदुपदेशवाची संप्रदायशब्दः प्रकृते परंपरालाक्षणिकः । बहुशः समधिकम् । अशोभि अशोभ्यत । इति यत् । अशोभीति शोभयतेः कर्मणि लुङि रूपम् । न तु शुद्धाच्छोभतेः कर्तरि । चिणो दुर्लभत्वात् । राजकुमारश्चात्र कर्ता ।

(तत्) विमतान् परितः शत्रूणां समन्तात्। भविष्यतां भाविनां आत्मस्फुरणानां राजकुमारविलसनानाम्। पूर्वरङ्गः प्राथमिकव्यापारः। निरणायि निश्चितम्। जनैरिति शेषः। रूपकेषु प्रथमकर्तव्यकृत्यवाची पूर्वरङ्गशब्दः प्रकृते एवंपरः॥

सुदृशामभजत्सुतोऽङ्कमङ्का-
त्कलिताह्वानगिरां करं प्रसार्य।
वलदम्बुरुहां यथा मरालो
नलिनीनामलिनीविराविणीनाम॥ ४१॥

**सुदृशामिति**॥ सुतः राजकुमारः। करं हस्तम्। प्रसार्य तदभिमुखं नीत्वा। कलिता कृता आह्वानगीः आगच्छ आगच्छेति वाक् याभिस्तासाम्। सुदृशां स्त्रीणाम्। अङ्कात् उत्सङ्गात्। अङ्कं उत्सङ्गम्। मरालः हंसः। अलिनीविराविणीनां भ्रमरीझङ्कारवतीनाम्। वलदम्बुरुहां चलत्पद्मानाम्। नलिनीनां पद्मिनीनाम्। अङ्कात्। अङ्कं यथा मध्यमिव। अभजत प्राप्तः॥

मुखरीकृतमुग्धकिङ्किणीकं
मुहुरङ्कुरितकेलिरङ्कणेषु।
तनुलग्नरजोभरस्तदानी-
मवनीधारणसाधनामतानीत्॥ ४२॥

**मुखरीकृतेति**॥ अङ्कणेषु। मुखरीकृताः शब्दायमानाः मुग्धाः मनोहराः किङ्किण्यः क्षुद्रघण्टिकाः यस्मिन् कर्मणि तद्यथा भवति तथा। मुहुः पुनः पुनः। अङ्कुरिता उन्मिषिता केलिः लीला यस्य सः। (सः) तदानीं लीलाकाले। तनौ शरीरे लग्नः सम्बद्धः रजोभरः धूलिभारः

यस्य स तथोक्तः सन् । अवनीधारणसाधनं भूधरणाभ्यासम् । अतानीत् तनोति स्मेव । **गम्योत्प्रेक्षा** ॥

अवनीवलहन्तुरङ्कमध्ये
विहरन्व्यञ्जितचापलो व्यलासीत् ।
अधिसानु यथानुकूलकेलिः
कनकक्षोणिभृतः करीन्द्रशावः ॥ ४३ ॥

**अवनीति** ॥ अवनीवलहन्तुः भूपीन्द्रस्य नृसिंहराजस्य । अङ्कस्य उत्सङ्गस्य मध्ये । विहरन् क्रीडन् । व्यञ्जितं प्रकटितं चापलं बाललौल्यं येन तथोक्तः । (सः) कनकक्षोणिभृतः मेरुपर्वतस्य । अधिसानु सानुनि । अनुकूला स्वैरं क्रियमाणा केलिः क्रीडा येन सः । करीन्द्रशावः करिकलभ इव । व्यलासीत् विललास ॥

अपमार्ज्य दुरक्षराण्यवन्या
रजसो विस्तृतिलक्ष्यतः कुमारः ।
वलदङ्गुलिनीतवर्णरेखो
व्यलिखत्किं स्वकलत्रभावरेखाम् ॥ ४४ ॥

**अपेति** ॥ कुमारः । रजसः धूल्याः । विस्तृतिलक्ष्यतः प्रक्षेपप्रसारणादिव्याजेन । अवन्याः भूमेः । दुरक्षराणि ब्रह्मणा लिखितानि क्लेशनिवेदकानि दुराक्षराणि । अपमार्ज्य परामर्श्य अपनीय । वलन्तीभिः प्रचलन्तीभिः अङ्गुलीभिः नीता कृता वर्णरेखा यदृच्छया वर्णस्वरूपसूचकरेखाविशेषो येन तथोक्तः सन् । स्वकलत्रभावरेखां स्वपरिग्रहत्वसूचिकां रेखाम् । व्यलिखत् लिलेख किमित्युत्प्रेक्षा ॥

अथ कैश्चिदहोभिरेव विद्या-
गुरुरध्यापयति स्म तं कुमारम् ।
मधुरुन्मिषितालिमञ्जुघोषः
परपुष्टं किल पञ्चमप्रपञ्चान् ॥ ४५ ॥

**अथेति** ॥ अथ । तं कुमारम् । गुरुः आचार्यः । कैश्चित् अहोभिः कतिपयैर्दिवसैरेव । विद्याः । उन्मिषितः उज्जृम्भितः अलीनां भ्रमराणां मञ्जुघोषः मनोहरध्वनिः यस्मिन् तादृशः । मधुः वसन्तः । परपुष्टं कोकिलम् । पञ्चमप्रपञ्चान् किल पञ्चमस्वरविभेदानिव । अध्यापयति स्म अध्यापयामास । किलशब्द इवार्थकः । तथा च यादवाभ्युदये 'निखिलचेतन...' इति पद्यव्याख्याने 'आपगाः किल सरित इव' इति दीक्षिताः ॥

नृपवर्यशिशोर्निसर्गजानां
निखिलानामपि देशिकः कलानाम् ।
परमुल्लसनाय पर्यणंसी-
त्सवितेवाम्बुजकोशसौरभाणाम् ॥ ४६ ॥

**नृपेति** ॥ देशिकः गुरुः । नृपवर्यशिशोः राजपुत्रस्य । निसर्गजानां स्वाभाविकीनां जन्मान्तरवासनावशादनुवर्तमानानाम् । निखिलानां समस्तानामपि । कलानां विद्यानाम् । सविता सूर्यः । अम्बुजकोशसौरभाणां कमलमुकुलगन्धानामिव । उल्लसनाय परं केवलमुल्लासाय उद्बोधमात्रायेत्यर्थः । पर्यणंसीत् पर्यणमत् उपयुक्तोऽभूदित्यर्थः । 'स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः ।' इति कुमारसम्भवः ॥

तरलीकृतखड्गवल्लरीकः
खुरलीसीम्नि सखेटकः कुमारः ।
समशोभत संचलत्तरङ्गो
जनितावर्त इवाकरो जलानाम् ॥ ४७ ॥

**तरलीकृतेति** ॥ खुरलीसीम्नि शस्त्रविद्याभ्यासभूभागे । तरलीकृता चञ्चलीकृता सर्वतः स्फोरितेत्यर्थः खड्गवल्लरी कृपाणलता येन सः । खेटेन प्रतिभटखड्गपातनिवारणार्थं धृतेन चक्राकारेण चर्मणा सहितः सखेटकः । कुमारः । संचलन्तः तरङ्गाः ऊर्मयः यस्य सः । जनितः उत्पादितः आवर्तः अम्भोभ्रमः येन सः तादृशः । जलानां आकरः समुद्र इव । समशोभत शुशुभे ॥

अधिरोपयतीन्दुवंशरत्ने
सचमत्कारतया शरासने ज्याम् ।
अतिचित्रममित्रपार्थिवाना-
मवरूढाजनि सेयमंसकूटात् ॥ ४८ ॥

**अधीति** ॥ इन्दुवंशः चन्द्रकुलमेव वंशः वेणुः तस्य रत्ने मुक्तामणौ राजकुमारे । शरासने धनुषि । ज्यां मौर्वीम् । सचमत्कारतया सविशेषतया । अधिरोपयति आरोपयति सति । अमित्रपार्थिवानां शत्रुराजानाम् । सा इयं ज्या भूमिः मौर्वी च । अंसकूटात् अंसशिखरात् । अवरूढा अवतीर्णा । अजनि जाता । इदं अतिचित्रं अत्याश्चर्यम् । अस्य शत्रवो विहाय राज्यं पलायामासुरिति भावः ॥

परिरक्षणतो वरं हि शिक्षा
प्रकृतानेन विखण्डितः पटिम्ना ।

**मणिचामरहेममानितो य-**

**द्ध्रियते वन्दिजनेन लोहदण्डः ॥ ४९ ॥**

**परीति** ॥ परिरक्षणतः रक्षणादपि । प्रकृता प्रक्रान्ता । शिक्षा हि दण्डनैव । वरं मनाक् प्रियम्। यत् यतः । अनेन राजकुमारेण । पटिम्ना पटुभावेन बलेनेत्यर्थः । विखण्डितः भञ्जितः । लोहदण्डः अयोदण्डः । मणिभिः रत्नैः चामरेण हेम्ना स्वर्णेन च मानितः पूजितः तद्युक्तः सन्नित्यर्थः । वन्दिजनेन स्तुतिपाठकैः । ध्रियते । तस्य सामर्थ्यप्रकटनाय तेन खण्डितं लोहदण्ड रत्नादिभिर्बहुमान्य यतो वन्दिनो धारयन्ति, ततो वरं शिक्षा रक्षणादिति भावः ॥

**मरुतं सुहृदं मदीयधाम-**

**ज्वलनस्य ज्वलतः पुरीष्वरीणाम् ।**

**निरुणद्धितरां निजान्तरित्या-**

**हितरोषोऽभिनदेष चर्मभस्त्रम् ॥ ५० ॥**

**मरुतमिति** ॥ अरीणां शत्रूणाम् । पुरीषु नगरेषु । ज्वलतः ज्वलिष्यतः । वर्तमानसामीप्ये शता । मदीयधाम मदीय तेज एव ज्वलनः अग्निः तस्य । सुहृदं महायभूतम् । मरुत वायुम् । निजान्तः स्वस्य अन्तःप्रदेशे । निरुणद्धितरां सम्यक् प्रतिबध्नाति । इति । आहितः उत्पन्नः रोषः कोपो यस्य स तथोक्तः (इव) एषः राजकुमारः । चर्मभस्त्रं अजिनभस्त्रिकाम् । अभिनत् भिनत्ति स्म । चर्मभस्त्रभेदनं महाबलसाध्यम् । तच्चाप्यय कृतवान् । तत्र हेतुरुत्प्रेक्षितः ॥

**अधिगत्य गतित्वरां हयाना-**

**मधिबाह्याल्यमुना प्रचालितानाम् ।**

परिपालयतीव भक्तिमुद्रां
पवमानः पदरेणुधारणेन ॥ ५१ ॥

**अधीति** ॥ अधिबाह्यालि बाह्यानि पुराद्बहिर्विद्यमाना विहारप्रदेशाः तेषां आलिः पङ्क्तिः तस्याम् । अमुना राजकुमारेण । प्रचालितानां धावितानाम् । हयानां अश्वानाम् । गतित्वरां गमनवेगम् । अधिगत्य अधीत्य । अधिकृत्येति पाठेऽपि स एवार्थः । पवमानः वायुः । पदरेणोः पादपरागस्य धारणेन । भक्तिमुद्रां भक्तिचिह्नं गाढां भक्तिं वा । परिपालयति रक्षतीव ॥

अधिरोपयति स्म हस्तिकण्ठे
जनतां तोषमिषेण जातमात्रः ।
अधुना पटुतामनेकपेन्द्रे
व्यवृणोदित्यपि किंनु विस्मयाय ॥ ५२ ॥

**अधिरोपयतीति** ॥ सः । जातमात्रः जात एव । जनतां जनसमूहम् । तोषमिषेण संतोषव्याजेन । हस्तिकण्ठे गजोपरि । आरोपयति स्म आरोपयामास । अधुना सांप्रतम् । अनेकपानां गजानां इन्द्रे श्रेष्ठे, गजराजविषय इत्यर्थः । पटुतां तदारोहणसामर्थ्यम् । व्यवृणोत् स्फुटीचकार । इत्येतदपि । विस्मयाय आश्चर्याय किं नु । जातमात्रस्यान्यान्गजस्कन्धमारोपयतः सांप्रतं स्वयं गजाधिरोहणं न विस्मयकरमिति भावः । संतोषस्य परा काष्ठा लोके गजस्कन्धाधिरोहणमिति व्यवह्रियते । तथा च 'एष नामानुगृहीतः । यः शूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।' इति शाकुन्तलम् । एतावता **वसन्तमालिका** वृत्तम् ॥

विद्याः समेत्य विविधा नृपतेस्तदासी-
दानन्दहेतुरतिवाहितशैशवोऽयम् ।
यातः क्रमाद्विलसितानि यथा कलानां
पाथोनिधेः किमपि पार्वणशर्वरीशः ॥ ५३ ॥

**विद्या इति** ॥ तदा । विविधाः समस्ताः । विद्याः । समेत्य प्राप्य अधीत्येत्यर्थः । अतिवाहितं यापितं शैशवं येन सः । अयं राजकुमारः । क्रमात् । कलानाम् । विलसितानि विलासान् समस्ताः कला इत्यर्थः । यातः प्राप्तः। पर्वणि भवः पार्वणः संपूर्ण इत्यर्थः, तादृशः शर्वरीशः चन्द्रः। पाथोनिधेः यथा समुद्रस्येव । नृपतेः नरसिंहराजस्य । किमपि वक्तुमशक्यतया । आनन्दहेतुः संतोषकारणम् । आसीत् । **वसन्ततिलकं** वृत्तम् ॥

**इति द्वितीयः सर्गः** ॥



# तृतीयः सर्गः ।



अथावनीवासवसूनुरभ्यगा-
दनङ्गराद्धान्तमलंक्रियां तनोः ।
वधूजनस्वान्तवशक्रियौषधं
वयो नवं शैशववासनासहम् ॥ १ ॥

**अथेति** ॥ अथ । अवनीवासवसूनुः पृथिवीन्द्रपुत्रः । अनङ्गराद्धान्तं कामसिद्धान्तम् । तनोः शरीरस्य । अलंक्रियां अलंकारम् । वधूजनानां स्त्रीणां स्वान्तस्य मनसः वशक्रियौषधं वशीकरणभेषजम् । शैशववासना शैशवगन्धः शैशवसंस्कारो वा शैशववार्तापीत्यर्थः, न सहत इत्यसहं शैशववासनाया असहं शैशववासनासहं अतीतशैशवमित्यर्थः । नवं नूतनम् । वयः तारुण्यम् । अभ्यगात् उपययौ । शैशववासनां सहत इति तादृशम् । नवं वयः बाल्यतारुण्ययोः सन्धिमिति वा । **रूपकम्** ॥

चमत्कृतं यौवनशिल्पिना तदा
समञ्चितभ्रूलतया सतोरणम् ।
अभूत्प्रवेशार्हमनङ्गभूपते-
रदःपुरं कान्त्यमृतात्तसेचनम् ॥ २ ॥

**चमत्कृतमिति** ॥ तदा । समञ्चिता सविलासा या भ्रूलता तया । सतोरणं वन्दनमालिकासहितं बहिर्द्वारसहितं वा । कान्त्यमृतेन कान्ति-

जलेन कान्तिसुधया वा आत्तं कृतं सेचनं यस्य तत्। यौवनं तारुण्यमेव शिल्पी कारुः तेन। चमत्कृत सविशेषरमणीयीकृतम्। अदःपुरं अमुष्य पुरं शरीरमेव नगरम्। 'पुरं नगरदेहयोः' इति विश्वः। अनङ्गभूपतेः मन्मथराजस्य। प्रवेशार्हं प्रवेशयोग्यम्। अभूत्। **परिणामः॥**

वचोऽधिदेव्या वदनाञ्चितास्थिते-
वतंसकर्णोत्पलवर्णधोरणी।
व्यराजतामुष्य कपोलमण्डले
विकस्वरश्मश्रुमिषेण बिम्बिता॥ ३॥

**वच इति**॥ वदने मुखे अञ्चिता पूजिता स्थितिः यस्यास्तस्याः। वचोधिदेव्याः सरस्वत्याः। वतंसः अलंकारभूतं यत् कर्णोत्पलं तस्य वर्णधोरणी कृष्णवर्णरेखा। विकस्वरस्य विलसतः श्मश्रुणः मिषेण व्याजेन। अमुष्य राजकुमारस्य। कपोलमण्डले गण्डमण्डले। बिम्बिता प्रतिफलिता सती। व्यराजत विरेजे। **सापह्नवोत्प्रेक्षा**॥

वहत्यविच्छिन्नतयैव कर्णिका-
मणिप्रभास्रोतसि मांसलोदये।
सशैवलाङ्कूरचमत्क्रियेव त-
त्कपोलभूः श्मश्रुकरम्बिताभवत्॥ ४॥

**वहतीति**॥ मांसलः सान्द्रः उदयः अभिवृद्धिः यस्य तस्मिन्। कर्णिकयोः कर्णालंकारयोः मणीनां रत्नानां प्रभास्रोतसि कान्तिप्रवाहे। अविच्छिन्नतया अविच्छिदेनैव। वहति प्रवहति सति। श्मश्रुकरम्बिता श्मश्रुव्याप्ता। तत्कपोलभूः तस्य कपोलप्रदेशः। सशैवलाङ्कूरचमत्क्रिया

शैवाललेशेन जायमाना या चमत्क्रिया शोभा तत्सहितेव । अभवत् । **रूपकं उत्प्रेक्षा च** ॥

विधिः सरोजं व्यधित स्वमन्दिरं
तुषारपातोऽपि न तेन सह्यते ।
इतीव सानन्दममुष्य बन्धुरं
भुजान्तरं मन्दिरमिन्दिरातनोत् ॥ ५ ॥

**विधिरिति** ॥ विधिः ब्रह्मा । सरोजं पद्मम् । स्वस्य आत्मनः मन्दिरं गृहम् । व्यधित कृतवान् । तेन सरोजेन । तुषारपातः हिमपतनमपि, अल्पाभिघातोऽपीति च । न सह्यते । इतीव इति मत्वेव । इन्दिरा लक्ष्मीः । सानन्द आनन्दसहितं यथा तथा । बन्धुरं मनोहरं सर्वसहमिति यावत् । अस्य । भुजान्तरं वक्षः । मन्दिरं गृहम् । अतनोत् अकुरुत । **उत्प्रेक्षा** ॥

फणाधरेन्द्रं परिहृत्य भीषणं
दृढादरामंसतटाधिरोहणे ।
ग्रहीतुमस्य प्रसृताविव क्ष्मां
व्यराजतां जानुविलम्बिनौ भुजौ ॥ ६ ॥

**फणेति** ॥ अस्य । जानुविलम्बिनौ आजानुदीर्घौ । भुजौ । भीषणं भयंकरम् । फणाधरेन्द्रं आदिशेषम् । परिहृत्य विहाय । अंसतटे भुजशिखरप्रदेशे अधिरोहणे । दृढः निश्चलः आदरः प्रीतिः यस्यास्ताम् । क्षितिं भूमिम् । ग्रहीतुं उपर्यारोपणाय हस्तावलम्बनं कर्तुम् । प्रसृतौ प्रवृत्ताविव । व्यराजतां अशोभेताम् । **परिकरः उत्प्रेक्षा च** ॥

क्रमात्समाक्रम्य शिशुत्वसंश्रितां
तदङ्गसीमानमिदं नवं वयः ।
किमस्य भूयः कशितात्मनोऽतनो-
स्कृपावशान्मध्यमदेशमाश्रयम् ॥ ७ ॥

**क्रमादिति** ॥ इदं नवं वयः यौवनम् । क्रमात् । शिशुत्वेन शैशवेन संश्रितां आश्रिताम् । तदङ्गसीमान तस्यावयवप्रदेशं तन्मर्यादां च । समाक्रम्य बलादधिष्ठाय । भूयः पुनरपि । कृपावशात् । कशितः कृशीकृतः आत्मा स्वरूपं यस्य तस्य । कृशतात्मन इति पाठे कृशतास्वरूपस्येत्यर्थः । अस्य शैशवस्य । मध्यमदेशं अवलग्नं मध्यमजनपदं च । आश्रयम् । अतनोत्किम् । **समासोक्तिः उत्प्रेक्षा च** ॥

समञ्चितं शोणिमसंपदाञ्चले
व्यशोभतामुष्य विलोचनद्वयम् ।
अपाङ्गलीलास्वरविन्दमन्दिरा-
पदाम्बुजालक्तकपङ्किलं किल ॥ ८ ॥

**समञ्चितमिति** ॥ अञ्चले प्रान्ते । शोणिमसंपदा रक्तिमश्रिया । **समञ्चितं** युतम् । अमुष्य । विलोचनद्वयं नेत्रयुगम् । अपाङ्गलीलासु कटाक्षविलासेषु । अरविन्दमन्दिरायाः लक्ष्म्याः पदाम्बुजयोः पादपद्मयोः **अलक्तकेन** यावकेन पङ्किलं किल संजातपङ्कमिव रञ्जितमिवेति यावत् । व्यशोभत शुशुभे । **उत्प्रेक्षा** ॥

करारविन्दे कठिने न मानसं
भ्रुवौ च कौटिल्यभुवौ न वाङ्मयम् ।

विमुक्तमर्यादतया विजृम्भितं
नवाभिरूप्यं न कदापि वर्तनम् ॥ ९ ॥

**करेति** ॥ करारविन्दे हस्तपद्मे एव । कठिने अनवरतव्यायामवशात् कर्कशे । मानसं मनस्तु । न कठिनम् । भ्रुवौ च । च एवार्थः । कौटिल्य-भुवौ भुग्नताभूमी । वाङ्मयं वाक् तु । कौटिल्यभूः कौटिल्यस्य अनार्जवस्य भूः स्थानम् । न । नवं नूतनं आभिरूप्यं रामणीयकम् । विमुक्तमर्यादतया त्यक्तावधिकतया अतिशयेनेत्यर्थः । विजृम्भितं उल्लसितम् । वर्तनं आचारस्तु । कदापि । विमुक्तमर्यादतया त्यक्तस्थितिकतया । न विजृम्भि-तम् । **परिसंख्या** ॥

निरर्गलायामनिरोधवर्त्मना
विना निदानं श्रवणे विरोधिनी ।
इतीव रोषातिशयस्पृशोर्दृशो-
रशोभि कोणेन विशोणिमाणिमा ॥ १० ॥

**निरर्गलेति** ॥ निदानं विना निष्कारणम् । निरर्गलः निष्प्रतिबन्धः समधिकः यः आयामः दैर्घ्यं तस्य निरोधः प्रतिबन्धः तस्य वर्त्मना मार्गेण स एव वर्त्म तेनेति वा तन्निरोधद्वारेत्यर्थः । श्रवणे कर्णौ । विरोधिनी शत्रुभूते । इति । रोषातिशयस्पृशोः कोपाधिक्यभाजोरिव । दृशोः नयनयोः । विशोणिम्नः आरुण्यस्य अणिमा लेशः । कोणेन प्रान्तेन । अशोभि अशोभ्यत । शोभयतेः कर्मणि लुङ् । 'कोणेऽस्य' इति पाठा-न्तरम् ॥

प्रमृष्टकन्दर्पमदस्य दर्पणः
प्रकाश्य तस्य प्रतिबिम्बसम्पदम् ।

समानतादुर्विधतां जहार य-

द्विभूतिमान्यस्य विजृम्भणं हि तत् ॥ ११ ॥

**प्रमृष्टेति** ॥ दर्पणः मुकुरः । प्रमृष्टः निरस्तः कन्दर्पमदः मन्मथस्य गर्वः येन तस्य । तस्य अच्युतराजस्य । प्रतिबिम्बानां प्रतिच्छायानां सदृशानां च सम्पदं समृद्धिम् । प्रकाश्य प्रदर्श्य । समानतायां सादृश्य-विषये दुर्विधतां दारिद्र्यम् । जहार अपनीतवान् । इति यत् । तत् । विभूत्या ऐश्वर्येण मृजाभस्मना च मान्यस्य माननीयस्य मृजासंस्कारेण वैमल्यं प्रापणीयस्य च । विजृम्भणं विलासः । तदेव हि विभूतेः फलं यद्दारिद्र्यहरणमिति भावः । **प्रतीपं श्लेषः अर्थान्तरन्यासश्च** ॥

अतत्समानब्जभवः स्मरादिमा-

न्व्यधत्त रूपव्ययलोभवानिव ।

तदेकरूपव्ययदुर्विधः स किं

तनोति तन्न्यूनतनुश्रियोऽपरान् ॥ १२ ॥

**अतदिति** ॥ (यः) अब्जभवः ब्रह्मा । रूपव्यये लोभवान् लुब्ध इव रूपव्ययभीरुरिवेत्यर्थः । स्मरादिमान् मन्मथप्रभृतीन् । अतत्समान् । अच्युतराजस्य विसदृशानेव । व्यधत्त निर्मितवान् । सः तादृशो ब्रह्मा । तदेकरूपव्ययदुर्विधः तस्याच्युतराजस्यैकस्यैव निर्माणे समुपयुक्तेन रूपव्ययेन दरिद्रः सन् । अपरान् अन्यान् । तन्न्यूनतनुश्रियः अच्युत-राजापेक्षया न्यूनशरीरलक्ष्मीकान् । तनोति सृजति किम् । रूपेणैतत्स-दृशः कोऽपि न भूतो न भवति चेति भावः ॥

करम्बितं यौवनकान्तिसंपदा

कुमारमालोक्य कुतूहलान्नृपः ।

अथानियायास्य विवाहकर्मणे

महीभुजां मन्त्रिमुखेन कन्यकाः ॥ १३ ॥

**करम्बितमिति** ॥ अथ । नृपः नृसिंहराजः । यौवनकान्तिसम्पदा तारुण्यर्जानतशोभातिशयेन । करम्बितं पूर्णम् । कुमारं पुत्रम् । कुतूहलात् अभिलाषेण । आलोक्य । अस्य अच्युतराजकुमारस्य । विवाहकर्मणे परिणयविधये । मन्त्रिमुखेन मन्त्रिद्वारा । महीभुजां राज्ञाम् । कन्यकाः पुत्रीः । आनिनाय आनीतवान् ॥

करेण सूनोः क्षितिपालकन्यका-

करानयं ग्राहयति स्म भूपतिः ।

प्रकाशितारुण्यरुचेः पयोजिनी-

प्रसूनपालीर्दिवसो यथा रवेः ॥ १४ ॥

**करणेति** ॥ अथ भूपतिः नृसिंहराजः । प्रकाशिनी प्रकाशवती तारुण्यरुचिः यौवनकान्तिः यस्य तस्य । सूनोः पुत्रस्य । करेण हस्तेन । क्षितिपालकन्यकाकरान् राजकुमारीहस्तान् । दिवसः अहः । प्रकाशितं आरुण्यं रक्तिमा यया सा प्रकाशितारुण्या, तादृशी रुचिः प्रभा यस्य तस्य । रवेः सूर्यस्य । करेण किरणेन । पयोजिनीप्रसूनपालीः यथा पद्मिनीपद्मदलानीव । ग्राहयति स्म ग्राहयामास ॥

कुलोद्वहास्वर्ककुमुद्वतीशयो-

र्वधूषु देवी वरदाम्बिकाभिधा ।

अमुष्य संतोषमपुष्यदान्तरं

विशिष्य तारास्विव रोहिणी विधोः ॥ १५ ॥

**कुलेति** ॥ अर्ककुमुद्वतीशयोः सूर्याचन्द्रमसोः । कुलोद्वहासु कुलोत्तारिकासु सूर्यचन्द्रवंशजाताखिल्यर्थः । वधूषु पत्नीषु । वरदाम्बिकाभिधा वरदाम्बिकानाम्नी। देवी। अमुष्य अच्युतराजकुमारस्य । विधोः चन्द्रस्य । तारासु नक्षत्रेषु । रोहिणी इव । विशिष्य विशेषतः । आन्तरं मानसिकम् । संतोषम् । अपुष्यत् पुपोष ॥

तनूभुवस्त्रीनपि तादृशश्रियः
समीक्ष्य साम्राज्यपदार्हलक्षणान् ।
अमन्यतैवान्तरुदन्वदम्बरां
परम्पराभोज्यतया पतिः क्षितेः ॥ १६ ॥

**तनूभुव इति** ॥ क्षितेः पतिः नृसिंहराजः । तादृशी श्रीः येषां तान् । साम्राज्यपदस्य चक्रवर्तित्वस्थानस्य अर्हाणि उचितानि लक्षणानि येषां तान्। त्रीन् अपि । तनूभुवः पुत्रान् । समीक्ष्य विलोक्य । अन्तः मनसि । उदन्वान् समुद्रः अम्बरं वस्त्रं यस्यास्तां समुद्रपर्यन्तां भूमिम् । परम्पराभोज्यतया स्वपुत्रपौत्रपरंपरया स्वकुलोपभोगार्हतया । अमन्यत मेने एव। यद्वा भोज्यता रक्षणीयता । अखण्डापि भूमिः स्ववंश्येष्वेवायातिष्यत इत्यमनुतेति तात्पर्यम् ॥

समेत्य साम्राज्यरमां मनोरमां
विनीतिमान्वीरनृसिंहभूपतिः ।
बहिर्व्यधाद्बन्धनमन्दिरादरी-
न्धरासुरान्किं च दरिद्रताभिधात् ॥ १७ ॥

**समेत्येति** ॥ विनीतिमान् विनयसंपन्नः । वीरनृसिंहभूपतिः । मनो-

रमां श्लाघ्याम् । साम्राज्यरमां साम्राज्यलक्ष्मीम् । समेत्य प्राप्य । अरीन् शत्रून् । बन्धनमन्दिरात् कारागृहात् । बहिः व्यधात् चकार मुमोचेत्यर्थः । किं च । धरासुरान् ब्राह्मणान् । दरिद्रताभिधात् दारिद्र्यनाम्नः । बन्धनमन्दिरात् । बहिः व्यधात् ।

अनन्तरं कीर्तिधुरंधरोऽदधा-
त्स कृष्णरायः सकलां वसुन्धरां ।
अमुष्य शीर्णैरभिषेकवारिभिः
शशाम विद्वेषणशौर्यपावकः ॥ १९ ॥

**अनन्तरमिति** ॥ अनन्तरम् । कीर्तिधुरंधरः यशस्वी । सः प्रसिद्धः । कृष्णरायः । सकलां वसुन्धरां समस्तां भुवम् । अदधात् अधारयत् । शीर्णैः परितः कीर्णैः । अमुष्य कृष्णरायस्य । अभिषेकवारिभिः अभिषेकजलैः । विद्वेषणानां शत्रूणां शौर्यपावकः शौर्याग्निः । शशाम शान्तः ॥

स कोण्डवीटिप्रमुखानि संगरे
महान्ति दुर्गाणि मतंगजेशितुः ।
पुरा गृहीत्वा पुटुपेट्टनूपुरे
न्यधादथ स्तम्भमसौ महाबलः ॥ ८१ ॥

**स इति** ॥ महत् बलं सैन्यं शक्तिर्वा यस्य सः । सः असौ कृष्णरायः । संगरे युद्धे । मतं गजेशितुः गजपतिराजस्य । कोण्डवीटिप्रमुखानि । महान्ति । दुर्गाणि । पुरा प्रथमतः । गृहीत्वा । अथ पश्चात् । पुटुपेट्टनूपुरे तन्नाम्नि नगरे । स्तम्भं जयस्तम्भम् । न्यधात् निचखान ॥

पयोधिकाञ्चीपरिणेतृतास्पदे
पदेऽभिषेक्तुं तमथाच्युतप्रभुम् ।
कुलाद्रिकूर्मोरगकुञ्जराग्रणी-
श्रमापहृत्यै समनाहि मन्त्रिभिः ॥ २० ॥

**पयोधीति** ॥ अथ । पयोधिः समुद्रः काञ्ची मेखला यस्यास्तस्याः पयोधिकाञ्च्याः भूमेः परिणेतृतास्पदे नायकतागोचरे । पदे स्थाने भूपतित्वस्थान इत्यर्थः । अच्युतप्रभु अच्युतरायम् । अभिषेक्तुम् । कुलाद्रीणां भूभारं वहतां कुलपर्वतानां कूर्मस्य आदिकूर्मस्य उरगस्य शेषस्य कुञ्जराग्रण्यां गजश्रेष्ठानां दिग्गजानां च यः भूभारवहनेन जातः श्रमः तस्य अपहृत्यै अपनोदनाय । मन्त्रिभिः सचिवैः । समनाहि समुद्युयुजे ॥

प्रचोदितास्तैः परिचारकास्तत-
स्तपात्ययेन स्तनयित्नवो यथा ।
अशेषतीर्थार्णववाहिनीजला-
न्यनैषुराज्ञासमकालमग्रतः ॥ २१ ॥

**प्रचोदिता इति** ॥ ततः अनन्तरम् । तैः मन्त्रिभिः । प्रचोदिताः प्रेरिताः । परिचारकाः भृत्याः । तपात्ययेन वर्षाकालेन । प्रचोदिताः । स्तनयित्नवो यथा मेघा इव । अशेषाणां समस्तानां तीर्थानां प्रभासादितीर्थानां अर्णवानां समुद्राणां वाहिनीनां कावेर्यादिनदीनां जलानि । **आज्ञासमकालं** आज्ञाक्षण एव । अग्रतः पुरस्तात् । अनैषुः नीतवन्तः ॥

युवानमाजानुभुजायतिं ततो
निशाम्य सर्वैर्निरचायि मन्त्रिभिः ।

भुजङ्गराजन्यधृतां भुवं कृती
भुजाङ्गदीकर्तुमसौ भवेदिति ॥ २२ ॥

**युवानमिति** ॥ ततः । आजानु जानुपर्यन्तं विद्यमाना भुजयोः आयतिः दैर्घ्यं यस्य त तथोक्तम् । युवान तरुणं अच्युतराजम् । निशाम्य विलोक्य । कृती धन्यः । असौ अच्युतराजः । भुजङ्गराजन्यधृतां सर्पराजेन धृताम् । भुवम् । भुजाङ्गदीकर्तुं हस्तयोः केयूरीकर्तुम् । भवेत् प्रभवेत् शक्नुयात् । इति । सचिवैः मन्त्रिभिः । निरचायि निश्चितम् ॥

प्रणामशीलः फणिशैलशासितुः
कदाचिदग्रे करशङ्खवारिणा ।
पयोधिकाञ्चीपरिणेतृतास्पदे
पदेऽभिषिक्तः स परंपरागते ॥ २३ ॥

**प्रणामेति** ॥ प्रणामशीलः प्रणमनपरः । सः अच्युतराजः । कदाचित् । फणिशैलशासितुः भगवतः शेषाचलनायकस्य । अग्रे पुरतः । करे विद्यमानात् शङ्खान्निःसारितेन वारिणा जलेन । परम्परागते कुलक्रमागते । पयोधिकाञ्चीपरिणेतृतास्पदे पदे भूपतित्वस्थाने । अभिषिक्तः ॥

प्रणीय विद्यानगरीं पतिं क्षिते-
रहीन्द्रशैलाधिभुवास्य कल्पिताम् ।
उदारवृत्तेरुदयुञ्जतोत्सवं
विधित्सवस्ते सचिवा विशेषतः ॥ २४ ॥

**प्रणीयेति** ॥ अहीन्द्रशैलाधिभुवा शेषाद्रिनायकेन । कल्पितां निर्मापिताम् । विद्यानगरीम् । क्षितेः पतिं अच्युतराजम् । प्रणीय

नीत्वा । ते । सचिवाः मन्त्रिणः । उदारवृत्तेः गम्भीरस्य । अस्य । उत्सवम् । विशेषतः विशेषेण । विधित्सवः विधातुमिच्छवः सन्तः । उदयुञ्जत उद्युक्ता अभूवन् ॥

निशान्तसंदानितवैजयन्तिका-
निरन्तरच्छायनिराकृतातपम् ।
परिष्कृतानेकविधप्रतोलिकं
पुरं विभोरैक्ष्यत पुङ्खितोत्सवम् ॥ २५ ॥

**निशान्तेति** ॥ विभोः पुरं विद्यानगरी । निशान्तेषु गृहेषु संदानितानां बद्धानां वैजयन्तिकानां ध्वजानां निरन्तरया निबिडया छायया निराकृतः निरस्तः आतपः यस्मिंस्तत् तथोक्तम् । निरन्तरा छाया यस्मिंस्तत् अत एव निराकृतातपमिति वा । परिष्कृताः अलंकृताः अनेकविधाः प्रतोलिकाः रथ्याः यस्य तत् । पुङ्खितः वर्द्धितः उत्सवः यस्मिंस्तत् तादृशम् । ऐक्ष्यत अदृश्यत ॥

विचित्रकौशेयवितानमण्डली-
विलम्बिमुक्तामणिदामचामरम् ।
परस्परप्रस्तुततर्कशिल्पवि-
त्प्रवर्तिताश्चर्यकृतचित्रपुत्रिकम् ॥ २६ ॥

**विचित्रेति** ॥ इतः परं सप्तश्लोकी एकान्वया । एतादृशं महीपतेः मन्दिरं अलक्षीति सम्बन्धः । विचित्राणां आश्चर्यकराणां नानावर्णानां वा कौशेयवितानानां दुकूलोल्लोचानां मण्डल्यां विलम्बीनि लम्बमानानि मुक्तामणिदामानि मौक्तिकमालाः चामराणि च यस्मिंस्तत् । परस्परेण

अन्योन्येन प्रस्तुतः प्रक्रान्तः तर्कः शिल्पकौशलविषये विवादः स्पर्धा वा यैस्ते तादृशैः शिल्पविद्भिः शिल्पिभिः प्रवर्तिताः निर्मिताः चित्राः विचित्राः पुत्रिकाः प्रतिमाः चित्रे आलेख्ये पुत्रिका वा यस्मिंस्तत् तथोक्तम् ॥

विशुद्धमुक्ताफलधूलिपालिका-
तरङ्गितप्राङ्कणरङ्गवल्लिकम् ।
इतस्ततः क्लृप्तहिमाम्बुसेचन-
प्रशान्तबाह्याङ्कणचन्द्रधूलिकम् ॥ २७ ॥

**विशुद्धेति** ॥ विशुद्धाः विशदाः याः मुक्ताफलधूलिपालिकाः मौक्तिकचूर्णपङ्क्तयः ताभिः तरङ्गिताः सर्वतः प्रवर्तिताः प्राङ्कणेषु आजिरेषु रङ्गवल्ल्यः भक्तिरचनाः यस्मिंस्तत् । इतः ततः सर्वतः । क्लृप्तेन आचरितेन हिमाम्बुसेचनेन प्रशान्ताः अनुत्पतन्त्यः बाह्याङ्कणेषु बहिश्चत्वरेषु विकीर्णाः चन्द्रधूलयः कर्पूरपरागाः यस्मिंस्तत् ॥

**समञ्चितारट्टवधूनखाञ्चल-
प्रपञ्चितारावविपञ्चिकाञ्चितम् ।
सकङ्कणप्रेङ्खणकोङ्कणाङ्गना-
मृदङ्गसंताडनभङ्गिसंगतम् ॥ २८ ॥**

**समञ्चितेति ॥ समञ्चितानां श्रेष्ठानां आरट्टवधूनां आरट्टदेशस्त्रीणां नखाञ्चलैः नखाग्रैः प्रपञ्चितारावाः विस्तारितध्वनयः याः विपञ्चिकाः वीणाः ताभिः अञ्चितं मनोहरम् । सकङ्कणप्रेङ्खणानां कटककम्पनाविशेषसहितानां कोङ्कणाङ्गनानां कोङ्कणस्त्रीणां मृदङ्गसंताडनस्य मृदङ्गवादनस्य भङ्ग्या शोभया संगतं सहितम् ॥**

कलिङ्गसारङ्गदृगालिघूर्णितो-
त्तरङ्गसौरभ्यकुरङ्गनाभिकम् ।
पटीरकर्पूरविमेलनाभटी-
निरूढलाटीकरहाटकोत्कटम् ॥ २९ ॥

**कलिङ्गेति** ॥ कलिङ्गसारङ्गदृशां कलिङ्गदेशमृगाक्षीणां आलिभिः समूहैः घूर्णिताः मर्दिताः उत्तरङ्गसौरभ्याः अतिसुगन्धयः कुरङ्गनाभयः कस्तूरिकाः यस्मिंस्तत् । पटीरकर्पूरविमेलनाभट्यां चन्दनकर्पूरसयोजनरीत्या निरूढानां कुशलानां लाटीनां लाटदेशस्त्रीणां करहाटकैः पद्मकन्दैः (इद सुगन्धिकन्दानामुपलक्षणम्) उत्कट अधिक व्याप्तमित्यर्थः ॥

विराटसौराष्ट्रवधूटिकालिका-
सटावचूडीकृतचारुवीटिकम् ।
त्रिगर्तपाठीनविवर्तलोचना-
प्रवर्तितारात्रिकपात्रवर्तिकम् ॥ ३० ॥

**विराटेति** ॥ विराटसौराष्ट्रवधूटिभिः विराटदेशोत्पन्नाभिः सौराष्ट्रदेशोत्पन्नाभिश्च स्त्रीभिः कालिकानां जटामांसीनां सटाभिः जटाभिः कूर्चिकाभिः अवचूडीकृताः अलंकृताः ताभिर्बद्धा इत्यर्थः चारवः वीटिकाः सज्जोपकरणकानि ताम्बूलानि यस्मिंस्तत् तथोक्तम् । पाठीनविवर्तवत् मीनोद्वर्तनवत् तरलानि लोचनानि नयनानि यासां ताः पाठीनविवर्तलोचनाः स्त्रियः यद्वा पाठीनविवर्ताः मत्स्यपरिणामाः मीनसदृशानीत्यर्थः तादृशानि लोचनानि यासामिति विग्रहः, त्रिगर्तपाठीनविवर्तलोचनाभिः त्रिगर्तदेशस्त्रीभिः प्रवर्तिताः कृताः संस्कृता वा आरात्रिकपात्रवर्तिकाः नीराजनार्थाः पात्रे निक्षिप्ताः वर्तयः यस्मिंस्तत् ॥

अवन्तिकुन्त्यान्ध्रपुरान्ध्रिकाकरा-
नुबन्धिसौगन्धिकदामदन्तुरम् ।
विदर्भसुभ्रूकरशिल्पवैदुषी-
विकल्पजल्पाकसिताभ्रगर्भकम ॥ ३१ ॥

**अवन्तीति** ॥ अवन्तिकुन्त्यान्ध्रपुरन्ध्रिकाणां अवन्त्यादिदेशयुवतीनां करानुबन्धिभिः हस्तसम्बन्धवद्भिः ताभिः स्वहस्तेन ग्रथ्यमानैरित्यर्थः, सौगन्धिकदामभिः कह्लारमालाभिः दन्तुरं व्याप्तम् । 'पुरन्ध्रिकाकलानुगन्धि' इति पाठान्तरम् । विदर्भसुभ्रुवां विदर्भदेशस्त्रीणां करशिल्पवैदुष्याः माल्यादिग्रथनविषये हस्तकौशलस्य विकल्पानां भेदानां जल्पाकाः निवेदयितारः सिताभ्रगर्भकाः धवलेन अभ्रकाख्येन लोहविशेषेण क्रियमाणानि 'ताण्डा' इति द्रामिडभाषया व्यवह्रियमाणानि शिरोमाल्यानि यस्मिंस्तत् । 'जल्पाकमदभ्रगर्भकम्' इति पाठान्तरम् । तदा जल्पाकमित्येतदपि महीपतिमन्दिरस्य विशेषणम् । अदभ्राः अधिकाः गर्भकाः शिरोमाल्यानि यस्मिन्निति व्याख्येयम् । 'केशमध्ये तु गर्भकः ।' इति अमरः ॥

अपारनेपालनृपालबालिका-
कलापसम्पादितधूपनैपुणम् ।
अलक्षि माङ्गल्यमयं किलाखिलं
महीपतेर्मन्दिरमिन्दिरास्पदम् ॥ ३२ ॥

**अपारेति** ॥ अपारेण अधिकेन नेपालनृपालबालिकाकलापेन नेपालराजकुमारीसमूहेन संपादितं निर्वर्तित धूपनैपुणं अगुरुधूपाद्युत्पादनसामर्थ्यं यस्मिंस्तत् । अपारेति सम्पादनक्रियाविशेषणं वा । माङ्गल्यमय

मङ्गलप्रचुरम् । अखिलं निःशेषम् । महीपतेः मन्दिरं राजसदनम् । इन्दिरायाः लक्ष्म्याः आस्पदं निवासः । अलक्षि दृष्टम् । किलेति प्रसिद्धौ ॥

**पराकृतैरम्मदपाटवानक-**
**प्रणादपारीणदरीप्रतिश्रुता ।**
**हरिष्यति क्ष्माभरमेष इत्यमी**
**कुलाचलाः क्ष्वेलनमाचरन्निव ॥ ३३ ॥**

**पराकृतेति** ॥ इरंमदस्य मेघज्योतिषः वज्राग्नेः इद ऐरम्मद यत् पाटवं शब्दविषये सामर्थ्यं निर्घोष इति यावत् तत् पराकृत निरस्त यैस्तेषां आनकानां पटहानां यः प्रणादः निस्वनः तस्य पारीणाः पारगताः तत्परिपूर्णा इत्यर्थः याः दर्यः गुहाः तासां प्रतिश्रुता प्रतिध्वनिना । कुलाचलाः महेन्द्रमलयादयः । एषः अच्युतराजः । क्ष्माभरं भूभारम् । हरिष्यति अपनेष्यति । इति । क्ष्वेलन सन्तोषेण सिंहनादम् । आचरन् अकुर्वन्निव । **उत्प्रेक्षा** ॥

**समञ्चितं कञ्चुकिनां जयारवैः**
**सहाप्तराजन्यजनेन केनचित् ।**
**अलंकृतं साङ्ग इवाङ्गजः शनै-**
**रसावयासीदभिषेकमण्टपम् ॥ ३४ ॥**

**समञ्चितमिति** ॥ असौ अच्युतरायः । केनचित् केनापि । आप्तः इष्टः यः राजन्यजनः सत्कुलजातक्षात्रियलोकः तेन सह । साङ्गः मूर्तिमान् । अङ्गजः मन्मथ इव । कञ्चुकिनां सौविदल्लानां । जयारवैः जयघोषैः । समञ्चितं शोभितम् । अलंकृतं परिष्कृतम् । अभिषेकमण्टपम् । शनैः मन्दमन्दम् । अयासीत् ययौ । 'समञ्चितः' इत्यपि पाठः ॥

अनादि नान्दीभिरनर्दि मद्दलै-
रराणि वीणाभिरभाणि वेणुभिः ।
अरेभि भेरीभिरगर्जि जर्झरै-
रगारि शृङ्गैः समकालि काहलैः ॥ ३५ ॥

**अनादीति** ॥ (तदा) नान्दीभिः वाद्यविशेषैः । अनादि शब्दितम् । अत्र सर्वत्र भावे लुङ् । मद्दलैः । अनर्दि । नर्द शब्दे । वीणाभिः । अराणि । वेणुभिः वंशैः । अभाणि भणितं शब्दितमित्यर्थः । रणभणौ शब्दार्थौ । भेरीभिः दुन्दुभिभिः । अरेभि अशब्दि । रेभृ शब्दे । जर्झरैः तन्नामकैर्वाद्यविशेषैः । अगर्जि गर्जितम् । गर्ज शब्दे । शृङ्गैः वाद्यविशेषैः । अगारि शब्दितम् । गॄ शब्दे । काहलैः । समकालि शब्दितम् । कल शब्दसंख्यानयोः ॥

कृताभिषेकः कृपया पुरा हरेः
स एष साम्राज्यपदेऽभ्यषिच्यत ।
श्लथाम्बुलेशव्यपदेशतो मही
तदाजनि स्विन्नतनुस्तदादरात् ॥ ३६ ॥

**कृतेति** ॥ हरेः विष्णोः । कृपया अनुग्रहेण । पुरा प्रथमतः । कृताभिषेकः अभिषिक्तः । सः एषः अच्युतरायः । साम्राज्यपदे चक्रवर्तित्वस्थाने । अभ्यषिच्यत अभिषिक्तः । तदा पट्टाभिषेककाले । मही भूमिः । तस्मिन् अच्युतराये आदरात् प्रीतेः । श्लथाः विकीर्णाः ये अम्बुलेशाः जलकणाः तेषां व्यपदेशतः व्याजेन । स्विन्ना सात्विकभावस्वेदवती तनुः मूर्तिः यस्यास्तथोक्ता । अजनि जाता । **सापह्नवोत्प्रेक्षा** ॥

अपाङ्गितप्रेङ्खदभीशुवीचिका-
कृतावलम्बैरिव गन्धवारिभिः ।
कराब्जसौवर्णघटापवर्जितै-
स्तमभ्यषिञ्चत्तरलेक्षणाजनः ॥ ३७ ॥

**अपाङ्गितेति** ॥ तरलेक्षणाजनः स्त्रीजनः । अपाङ्गितैः नेत्रान्तवलनैः प्रेङ्खतां प्रसरतां अभीशूनां कान्तीनामेव रज्जूनां वीचिकाभिः तरङ्गैः परम्पराभिरित्यर्थः कृतः अवलम्बः धारण येषां तादृशैरिव स्थितैः । कराब्जेषु हस्तारविन्देषु विद्यमानाः ये सौवर्णघटाः कनककलशाः तैः अपवर्जितैः विसृष्टैः । गन्धवारिभिः सपरिमलैः जलैः । त अच्युतरायम् । अभ्यषिञ्चत् अभिषिषेच ॥

कृताभिषेकस्तुलुवक्षितिक्षितां
कुलाग्रणीः कुङ्कुमवारिधारया ।
करीव सिक्तो गिरिधातुनिर्झरैः
शशीव सायन्तनसन्ध्ययारुचत् ॥ ३८ ॥

**कृतेति** ॥ तुलुवक्षितिक्षितां तुलुवमहीपतीनाम् । कुलाग्रणीः कुलश्रेष्ठः अच्युतरायः । कुङ्कुमवारिधारया कुङ्कुमसहितसलिलधारया । कृताभिषेकः अभिषिक्तः सन् । गिरिधातुनिर्झरैः गैरिकधातुविमिश्रैः प्रस्रवणजलैः । सिक्तः । करी गज इव । सायंतनसन्ध्यया सायंकालिकसंध्यारागेण । सिक्तः रूषितः । शशी चन्द्र इव च । अरुचत् अशोभत । रुच दीप्तौ । 'द्युद्भ्यो लुङि' इति पाक्षिके परस्मैपदे 'पुषादिद्युताद्य—' इति अङ् ॥

अलोकि लोकैर्हरिचन्दनोदकं
विजृम्भितं मण्टपवेदिकाङ्कणे ।
निरीक्ष्य कान्तं नृपमाशयादमा-
न्भुवोऽनुरागो बहिरुद्यतो यथा ॥ ३९ ॥

**अलोकीति** ॥ लोकैः जनैः । मण्टपवेदिकाङ्कणे अभिषेकमण्टपे विद्यमानायाः वितर्दिकायाः प्रदेशे । विजृम्भितं समुल्लसितम् । हरिचन्दनोदकं रक्तचन्दनजलम् । कान्तं रमणीयं भर्तारम् । नृपं अच्युतराजम् । निरीक्ष्य विलोक्य । (स्थितायाः) भुवः भूमेः नायिकायाः । अमान् अनन्तर्भवन् अमित इत्यर्थः । (अत एव) आशयात् हृदयात् । बहिः । उद्यतः निर्गतः । अनुरागः यथा अनुराग इव । अलोकि दृष्टम् । अनुरागो रक्तवर्ण इति सम्प्रदायः ॥

अधारयत्पाण्डरमम्बरं क्षिते-
रधीश्वरः स्नानविधेरनन्तरम् ।
समाप्तवर्षस्नपनो यथा गिरिः
शरन्मुखे छन्ननितम्बमम्बुदम् ॥ ४० ॥

**अधारयदिति** ॥ क्षितेः अधीश्वरः अच्युतराजः । स्नानविधेः अनन्तरम् । पाण्डरं धवलम् । अम्बरं वस्त्रम् । शरन्मुखे शरदारम्भे । समाप्तं अवसितं वर्षस्नपनं वर्षाकालिकवृष्टिसेचनं यस्य स तादृशः । गिरिः पर्वतः । छन्ननितम्बं आच्छादितकटकप्रदेशम् । अम्बरेऽपि विशेषणमिदं सुयोजम् । अम्बुदं यथा मेघमिव । अधारयत् धृतवान् ॥

समाप्य सर्वां समनन्तरक्रियां
नृपासनस्थो नृपतिर्निरैक्ष्यत ।
सुमेरुसङ्गीव सुरेन्द्रपादपः
श्रियः सखेव श्रितभानुमण्डलः ॥ ४१ ॥

**समाप्येति** ॥ सर्वां समनन्तरक्रियां समस्तमपि अनन्तरकरणीयम् । समाप्य निर्वर्त्य । नृपासनस्थः सिंहासने स्थितः । नृपतिः अच्युतराजः । सुमेरुसङ्गी मेरुपर्वते विद्यमानः । सुरेन्द्रपादपः कल्पवृक्ष इव । श्रित अधिष्ठितं भानुमण्डलं सूर्यबिम्बं येन स तादृशः । श्रियः सखा लक्ष्मीपतिः नारायण इव । निरैक्ष्यत दृष्टः ॥

प्रचालितोऽग्रे परिचारिकाजनै-
र्नृपस्य नीराजनदीपिकोत्करः ।
दिगन्तरभ्रान्तिमिषान्नटिष्यतो
दधौ प्रतापस्य स पूर्वरङ्गतां ॥ ४२ ॥

**प्रचालित इति** ॥ (यः) नीराजनदीपिकानां आरात्रिकदीपिकानां उत्करः समूहः । नृपस्य । अग्रे पुरस्तात् । परिचारिकाजनैः । प्रचालितः भ्रमितः । सः नीराजनदीपिकोत्करः । दिगन्तरभ्रान्तिमिषात् दिगन्तरेषु भ्रमणव्याजेन । नटिष्यतः नर्तिष्यतः । प्रतापस्य । पूर्वरङ्गतां प्राथमिकतां आरम्भकृत्यतामित्यर्थः । दधौ दधार । 'दिगन्तरे भ्रान्तिमिषात्' इति पाठे तु भ्रान्तिमिषात् दिगन्तरे नटिष्यत इत्यपि व्याख्यातुं शक्यम् ॥

अरालकेशीभिरनाटि मेदिनी-
स्वयंवरप्रेयसि शोभिते श्रिया ।

वलाहके दर्शितवार्षिकोदये
न किं शिखिन्यो नटनं विवृण्वते ॥ ४३ ॥

**अरालेति** ॥ मेदिन्याः भूमेः स्वयंवरप्रेयसि स्वयंवृतपतौ अच्युतराये । श्रिया राजलक्ष्म्या । शोभिते सति । अरालः कुटिलः भङ्गिमानित्यर्थः केशः यासां ताभिः स्त्रीभिः । अनाटि र्नाटितम् । भावे लुङ् । वलाहके मेघे । दर्शितः वार्षिकोदयः वर्षाकालिकसंपत्तिः येन तस्मिन् तथोक्ते सति । शिखिन्यः मयूर्यः । नटनं नर्तनम् । न विवृण्वते किं न कुर्वन्ति किम् । **दृष्टान्तालङ्कारः** ॥

विनीतसामन्तविधूतचामर-
द्वयान्वितोऽलक्ष्यत धूर्वहः क्षितेः ।
तुषारशैलो दृषदाहतिद्विधा-
पनीपतन्नाकधुनीपया इव ॥ ४४ ॥

**विनीतेति** ॥ विनीतैः विनयसंपन्नैः सामन्तैः विधूतं वीजितं यत् चामरद्वयं तेन अन्वितः युतः उभयतश्चामराभ्यां वीज्यमान इत्यर्थः । क्षितेः भूमेः । धूर्वहः भारोद्वहः अच्युतरायः । दृषत्सु शिलासु आहत्या संघट्टनेन द्विधापनीपतत् द्विधा विभज्य प्रवहत् नाकधुनीपयः गङ्गाजलं यस्य स तथोक्तः । तुषारशैलः हिमवत्पर्वत इव । अलक्ष्यत दृष्टः । पनीपतदिति पततेर्यङ्लुगन्ताच्छता ॥

**मनुक्रमो रक्षति तत्कुलक्ष्मा-**
**पतीनितीवानुजिघृक्षया गतौ ।**

तमीशसूर्याविव धारिते किम-
ष्यराजतामातपवारणे विभोः ॥ ४५ ॥

**मन्विति** ॥ विभोः प्रभोः अच्युतरायस्य। धारिते धृते। आतपवारणे छत्रे। मनुना व्यवस्थापितः क्रमः राज्यपरिपालनरीतिः। तत्कुलक्ष्माप-तीन् तद्वंशराजान्। रक्षति। तद्वंशराजाः मनुक्रमेण परिपालयन्तीत्यर्थः। इतीव। अत्रेवकारो वाक्यालङ्कारे। अनुजिघृक्षया अनुग्रहीतुमिच्छया। आगतौ। तमीशसूर्यौ चन्द्रसूर्याविव। किमपि अनिर्वचनीयतया। अराजतां शोभितवन्तौ। 'मत्कुलक्ष्मापतीनतीव' इति पाठान्तरम् ॥

कलिङ्गभूमेः कमिता कलाचिकां
मणीनिबद्धां मगधोऽस्य पादुकाम् ।
शकाधिपश्चामरमञ्जरीमधा-
त्स्वयं कृपाणीमपि सिंहलेश्वरः ॥ ४६ ॥

**कलिङ्गेति** ॥ कलिङ्गभूमेः कमिता कलिङ्गाधिपः। अस्य अच्युत-रायस्य। कलाचिकां पतद्ग्रहं भृङ्गारम। मगधः। मणीनिबद्धां रत्नख-चिताम्। पादुकां उपानहम्। शकाधिपः। चामरमञ्जरीं स्तबकसदृश वालव्यजनम्। सिंहलेश्वरः सिंहलाधिपोऽपि। स्वयम। कृपाणीं खड्गम्। अधात् उवाह ॥

क्ष्माभुजः काञ्चनपुष्पमग्रतः
प्रकीर्य भक्त्या प्रतिपादितोपदाः ।
व्यनंसिषुर्वशमाणिं विधोस्त्वरा-
विघट्टितान्योन्यकिरीटकोटयः ॥ ४७ ॥

**क्षमेति** ॥ क्षमाभुजः राजानः । भक्त्या । काञ्चनपुष्पं हिरण्मयानि कुसुमानि । अग्रतः अग्रे । प्रकीर्य अवकीर्य । प्रतिपादिताः उपदाः उपायनानि यैस्तथोक्ताः । त्वरया संभ्रमेण विघट्टिता घर्षिता अन्योन्य-किरीटकोटिः परस्परमकुटाग्रभागः येषां ते तथोक्ताश्च सन्तः । विधोः चन्द्रस्य । वंशमणिं वंशरत्नं तत्कुलश्रेष्ठं अच्युतरायमित्यर्थः । व्यनंसिषुः नमन्ति स्म ।

> महत्तरे मानवलोकशासितु-
>
> र्मनोऽनुकूला महिषीपदे तदा ।
>
> कृताभिषेका सलगक्षितीशितु-
>
> र्वरात्मजासीद्वरदाम्बिकावधूः ॥ ४८ ॥

**महत्तर इति** । तदा तस्मिन् समये । सलगक्षितीशितुः सल-गराजस्य । वरात्मजा श्रेष्ठपुत्री वरलब्धा पुत्री वा । मानवलोकशासितुः अच्युतराजस्य । मनसः हृदयस्य अनुकूला रुचिता । वरदाम्बिकावधूः वरदाम्बिकानाम्नी राज्ञी । महत्तरे प्रशस्ततरे । महिषीपदे देवीत्वस्थाने । कृताभिषेका अभिषिक्ता । आसीत् ॥

> प्रसूनसौभाग्यपुषा यशोमिषा-
>
> त्प्रजानुरागप्रकटीक्रियार्हया ।
>
> स एष साम्राज्यपदश्रियारुच-
>
> द्वसन्तलक्ष्म्येव वदान्यपादपः ॥ ४९ ॥

**प्रसूनेति** ॥ स एषः अच्युतराजः । यशोमिषात् कीर्तिव्याजेन । प्रसू-नानां कुसुमानां सौभाग्यं शोभां पुष्णाति इति तया । प्रजानां यः अनुरागः

प्रीतिः तस्य प्रकटीक्रियायाः प्रकाशनस्य अर्हया समुचितया । एतद्विशेषणद्वयमुपमानेऽपि योज्यम् । साम्राज्यपदश्रिया चक्रवर्तित्वस्थानलक्ष्म्या । वदान्यः दाता यः पादपः वृक्षः कल्पवृक्ष इत्यर्थः । वसन्तलक्ष्म्या वसन्तश्रियेव । अरुचत् शोभितवान् ।

चकार यन्मेरुमनादिमः पुमान्
सुवर्णरूपं सुरसंसदां वशे ।
सुवर्णमेरुं स्वयमस्य सेवको
महीसुरेभ्योऽदित मानवेश्वरः ॥ ५० ॥

**अकारयदिति** ॥ यत् यस्मात् । न विद्यते आदिमः यस्मात्सः अनादिमः सर्वादिभूत इत्यर्थः, तादृशः पुमान् परमपुरुषः श्रीमन्नारायणः । सुवर्णरूपं स्वर्णमयम् । मेरुं महामेरुपर्वतम् । सुरससदां देवबृन्दानाम् । वशे अधीनतायाम् । चकार अकरोत् । (तत्) अस्य आदिपुरुषस्य नारायणस्य । सेवकः भक्तः । मानवेश्वरः अच्युतनृपतिः । स्वयं आत्मना । महीसुरेभ्यः ब्राह्मणेभ्यः । सुवर्णमेरुं मेरुपर्वताकारं सुवर्णम् । अदित दत्तवान् ॥

फलं यदस्याः पतिसेवया प्रभोः
फणीशपर्यङ्कपदार्चया च यत् ।
चिरात्तदासीच्चिनवेङ्कटाद्रिरि-
त्यभिख्ययाक्ष्णोरपि दीर्घमायुषि ॥ ५१ ॥

**फलमिति** ॥ अस्याः वरदाम्बिकायाः । पतिसेवया भर्तृशुश्रूषया । यत् फलम् । प्रभोः अच्युतराजस्य । फणीशः आदिशेषः पर्यङ्कः खट्वा यस्य तस्य फणीशपर्यङ्कस्य भगवतो नारायणस्य पदार्चया चरणार-

विन्दार्चनेन । यच्च फलम् । तत् फलम् । चिरात् चिरकालानन्तरम्, चिरात् चिरकालपर्यन्तमिति पूर्ववाक्यान्वयि वा । अक्ष्णोः नयनयोः । आयुष्यपि । दीर्घे सत् । 'चिनवेङ्कटाद्रिः' इति अभिख्यया नाम्ना । आसीत् अभूत् । भगवत्कृपया दीर्घायुर्दीर्घाक्षश्च चिनवेङ्कटाद्रिनामा तनयः समुत्पन्न इति भावः ॥

अनेन राज्ञा चिनवेङ्कटाद्रिर-
प्ययोजि लक्ष्मीं युवराजपूर्विकाम् ।
क्षमापतौ राज्यरमा सयौवन-
क्रमा च कौमारमसावसूचयत् ॥ ५२ ॥

**अनेनेति** ॥ अनेन राज्ञा अच्युतराजेन । चिनवेङ्कटाद्रिरपि । युवराजपूर्विकां युवराजशब्दपूर्विकाम् । लक्ष्मीं यौवराज्यलक्ष्मीम् । अयोजि योजितः । असौ इयम् । राज्यरमा राज्यलक्ष्मीः । क्षमापतौ राज्ञि अच्युतराये । यौवनक्रमेण यौवनाभिवृद्ध्या सहिता सयौवनक्रमा परिपूर्णेत्यर्थः तादृशी च सती । कौमारं कुमारीभावं युवराजसंबन्धं च । असूचयत् न्यवेदयत् प्राप्तवतीति यावत् । यद्वा सयौवनक्रमा युवराजसंबन्धेन यौवनोदयसहिता सती । क्षमापतौ चिनवेङ्कटाद्रौ कौमारं कुमारीभावं कुमारशब्दवाच्यताम् । असूचयत् अकरोत् । युवराजः कुमार इति व्यपदिश्यते ॥

यथा जयन्तेन पुरन्दरो यथा
नरोपवाह्यो नलकूबरेण च ।
अराजदव्याजसुहृत्सतां तथा
चिरायुषा श्रीचिनवेङ्कटाद्रिणा ॥ ५३ ॥

**यथेति** ॥ सतां साधूनाम् । अव्याजसुहृत् निर्व्याजबन्धुः अच्युतरायः । जयन्तेन तन्नाम्ना सुतेन । पुरन्दरः इन्द्रः । यथा (विराजते) नरः औपवाह्यः वाहनं यस्य सः नरवाहनः कुबेरश्च । नलकूबरेण तन्नाम्ना पुत्रेण । यथा (विराजते) तथा । चिरायुषा दीर्घायुषा । श्रीचिनवेङ्कटाद्रिणा स्वसुतेन । अराजत् अशोभत । एतावत्पर्यन्त **वंशस्थं** प्रायेण वृत्तम् । क्वचित्क्वचित् **इन्द्रवंशापि** ॥

अभिमतपिकवाणीपञ्चमैरञ्चितश्री-
रपि च वरदमाम्बावीरुदालम्बभूतः ।
पतिररुचदवन्याः प्राप्तसाम्राज्यलक्ष्म्या
शतमखपुरशाखी चैत्रलक्ष्म्या यथैव ॥ ५४ ॥

**अभिमतेति** ॥ अभिमताः इष्टाः याः पिकवाण्यः स्त्रियः तासां पञ्चमैः मधुरैः स्वरैः । अत्र पञ्चमशब्दो मधुरस्वरपरः । अन्यत्र अभिमतानां पिकानां कोकिलानां वाणीपञ्चमैः पञ्चमस्वरैः । 'अभिमतसुतवाणीपञ्चमैः' इति पाठान्तरम् । अञ्चिता शोभिता श्रीः समृद्धिः यस्य स तथोक्तः । अपि च किंच । वरदमाम्बा वरदाम्बानाम्नी देवी सैव वीरुत् लता तस्याः आलम्बभूतः । अवन्याः पतिः अच्युतरायः । प्राप्ता अधिगता या साम्राज्यलक्ष्मीः चक्रवर्तित्वश्रीः तया । शतमखपुरशाखी इन्द्रनगरवृक्षः कल्पवृक्ष इत्यर्थः । चैत्रलक्ष्म्या यथा चैत्रकालिकश्रियेव वसन्तलक्ष्म्येवेत्यर्थः । अरुचत् विललासैव । 'प्राप्तसाम्राज्यलक्ष्मीः' इति पाठान्तरम् । **मालिनी** वृत्तम् ॥

**इति तृतीयः सर्गः** ॥





## चतुर्थः सर्गः ।

वासरोऽथ वसुधावलद्विषो

वल्लभेति महिषीपदे महीम् ।

आदरात्किमभिषेक्तुमाहर-

न्नम्बुवाहमणिकुम्भमाययौ ॥ १ ॥

**वासर इति** ॥ अथ । वासरः दिवसः । वसुधावलद्विषः भूर्मान्द्रस्य अच्युतरायस्य । वल्लभा प्रेयसी । इति हेतोः । महीं भूमिम् । महिषीपदे देवीस्थाने । आदरात् प्रीत्या । अभिषेक्तुम् । अम्बुवाहः जलधर एव मणिकुम्भः रत्नखचितघटः तम् । आहरन् आनयन् सन् । आययौ आगतः किम् । **उत्प्रेक्षा रूपकं च** ॥

शौर्यमारुतसखस्य संनिधौ

कल्पितानघकरग्रहे नृपे ।

मेदिनी पुलकजालमेदुरा

नीपकुड्मलनिभादभासत ॥ २ ॥

**शौर्येति** ॥ नृपे अच्युतराये । शौर्यमेव मारुतसखः अग्निः तस्य संनिधौ । कल्पितः कृतः अनघः मनोहरः निष्पापश्च करग्रहः विवाहः राजदेयद्रव्यस्वीकारश्च येन तथाभूते सति । मेदिनी भूमिः । नीपकुड्मल-निभात् नीपमुकुलव्याजेन । पुलकजालेन रोमाञ्चसमूहेन मेदुरा व्याप्ता सती । अभासत शुशुभे । **सापह्नवोत्प्रेक्षा समासोक्तिश्च** ॥

अस्य कर्तुमभिषेकमङ्गला-
रात्रिकश्रियमिवावनीभुजः ।
प्रावृषाप्यजनि मेघभाजन-
प्रस्तुताचिररुचिप्रदीपया ॥ ३ ॥

**अस्येति** ॥ प्रावृषा वर्षाकालेनापि । स्त्रीलिङ्गात् काचित्स्त्र्यपि गम्यते । अस्य अवनीभुजः राज्ञः । अभिषेकमङ्गले क्रियमाणस्य आरात्रिकस्य नीराजनायाः श्रियं लक्ष्मीम् । कर्तुं आचरितुमिव । मेघ एव भाजनं दीपपात्रं तत्र प्रस्तुतः प्रक्रान्तः उद्दीपित इति यावत् अचिररुचिः विद्युदेव प्रदीपः यया तया तथोक्तया । अजनि जातम् । भावे लुङ् ॥

पालिता प्रतिनवेन भूभुजा
वारिराशिरशना वसुन्धरा ।
केतकीकुसुमपांसुकैतवा-
त्प्राक्तनान्परिजहास पार्थिवान् ॥ ४ ॥

**पालितेति** ॥ प्रतिनवेन नूतनेन । भूभुजा राज्ञा । पालिता रक्षिता सती । वारिराशिरशना समुद्रमेखला । वसुंधरा भूमिः । केतकीकुसुमपांसुकैतवात् कैतकधूलिव्याजेन । प्राक्तनान् प्राचीनान् । पार्थिवान् राज्ञः । परिजहास परिहसति स्म ॥

वर्षुकं समवलोक्य वारिदं
चातकद्विजकुलस्य हृष्यतः ।
बाष्पवर्षकृतसेचना नवा-
द्धर्षतोऽजनि पुरा वसुन्धरा ॥ ५ ॥

**वर्षुकमिति** ॥ वसुन्धरा भूमिः । नवात् नूतनात् । वर्षतः वृष्टेः । पुरा प्रागेव । वर्षुकं वर्षिष्यन्तम् । वारिदं मेघम् । विलोक्य । हृष्यतः संतुष्यतः । चातकद्विजकुलस्य चातकपक्षिसमूहस्य । बाष्पवर्षेण आनन्द-बाष्पवृष्ट्या कृत सेचनं सेकः यस्यास्तथोक्ता । अजनि जाता । अत्र वारिद-द्विजादिपदैः मेघसदृशाच्युतरायब्राह्मणादिप्रतीतेः **समासोक्तिः अति-शयोक्तिश्च** ॥

अभ्रपङ्क्तिरकिरत्पयःकणा-
न्निर्भरोष्मणि निदाघतः क्षितौ ।
गर्भिताशनितया तदुद्भवं
घ्रातुमादरवतीव सौरभम् ॥ ६ ॥

**अभ्रेति** ॥ अभ्रपङ्क्तिः मेघावलिः, स्त्रीलिङ्गात् काचित्स्त्रीति च । गर्भितः अन्तःस्थितः अशनिः वज्रं यस्यास्तस्या भावेन, गर्भिणीत्वेन चेति गम्यते । तदुद्भव भूम्युद्भवम् । सौरभं सुगन्धम् । घ्रातुं अनुभवितुम् । आदरवती साभिलाषेव । निदाघतः ग्रीष्मेण । निर्भरोष्मणि अधिकौष्ण्या-याम् । क्षितौ भूमौ । पयःकणान् जलशीकरान् । अकिरत् विकिरति स्म । गर्भिण्याः मृद्भक्षणमृत्तिकागन्धाघ्राणादिकं प्रसिद्धमिति तथोत्प्रेक्षा ॥

अम्बु पीतमवपत्य दुस्तरा-
दम्बरादतितरामपां निधौ ।
प्रावृषा पवनचक्रयोजिता
वारिदा ववमुरश्चितभ्रमाः ॥ ७ ॥

**अम्ब्विति** ॥ दुस्तरात् तरितुमशक्यात् दुरारोहात् अत्युन्नतादिति यावत् । अम्बरात् आकाशात् । अवपत्य पतित्वा अवरुह्य च । अपां निधौ

समुद्रे । अतितरां अत्यन्तम् । पीतम् । अम्बु जलम् । ( कर्म ) वारिदा- मेघाः । प्रावृषा वर्षाकालेन । पवनचक्रेण मण्डलवायुना योजिताः मेलिताः, पवनचक्रे सवाते चक्राकारयन्त्रे योजिताः स्थापिताश्च । अञ्चित. कृतः भ्रमः भ्रमणं इतस्ततः संचारश्च येषां तथोक्ताः सन्तः । ववमुः उद्गिरन्ति स्म । लोकेऽपि कूपादौ पतितः पीतजलः पुरुषः कुलालचक्रयन्त्रमारोप्य परिभ्रमणेन पीतं जलमुद्राय्यत इति स्थितिः । **समासोक्तिः** ॥

**अम्भसार्द्रितमवादयन्नभा-**
**स्तापयन्हुतवहे तटिन्मये ।**
**मद्दलं मदजुषां शिखण्डिनां**
**ताण्डवानुगुणमभ्रमण्डलम् ॥ ८ ॥**

**अम्भसेति** ॥ नभाः वर्षाकालः । 'नभा घ्राणे बिसतन्तौ पतद्ग्रहे । प्रावृषि श्रावणे' इति हैमः । अम्भसा जलेन । आर्द्रितं आर्द्रीकृतम् । अभ्रमण्डलं मेघसमूहमेव । मद्दलम् । तटिन्मये विद्युद्रूपे । हुतवहे अग्नौ । तापयन् विशोष्य तप्तं कुर्वन् सन् । मदजुषां मत्तानाम् । शिखण्डिनां मयूराणाम् । ताण्डवस्य नटनस्य अनुगुणं अनुकूलं यथा तथा । अवाद- यन् वादितवान् । **रूपकम्** ॥

**चातकाः सततधारमक्षमाः**
**पातुमम्बु परिपीडिता मुखे ।**
**प्राक्समीरशिथिलैः पयःकणैः**
**कुर्वते स्म निजकुक्षिपूरणम् ॥ ९ ॥**

**चातका इति** ॥ चातकाः चातकपक्षिणः । मुखे । परिपीडिताः

धारापातेन आहताः । सततधारं अविच्छिन्नपातम् । अम्बु जलम् । पातुम् । अक्षमाः अशक्ताः सन्तः । प्राक् प्रथमतः । समीरेण वायुना शिथिलैः लघूकृत्य विशीर्णैः । पयःकणैः जलबिन्दुभिः । निजकुक्षिपूरणं स्वोदरपूर्तिम् । कुर्वते स्म अकुर्वत ॥

वारिदे शरमुचि प्रधाविनी
वाहिनी निविशते स्म वारिधौ ।
राजहंससदसापि दुद्रुवे
लक्ष्यमस्ति किमु जीवनत्यजाम् ॥ १० ॥

**वारिद इति** ॥ वारिदे मेघे । कस्मिंश्चन धानुष्क इत्यपि गम्यते । शरं जलं बाणं च मुञ्चतीति तस्मिन् शरमुचि सति । 'शरस्तु तेजने बाणे दध्यग्रे ना शरं जले ।' इति विश्वः । वाहिनी नदी सेना च । प्रधाविनी वेगवती पलायमाना च सती । वारिधौ समुद्रे । निविशते स्म प्रविष्टा निलीना च । राजहंसानां हंसविशेषाणां राजश्रेष्ठानां च सदसा सघेनापि । दुद्रुवे पलायितम् । जीवनं जलं त्यजन्ति विसृजन्तीति जीवनत्यजः तेषां जीवनत्यजां जलवर्षिणाम्, जीवनं प्राणान् त्यजन्ति सति समये उपेक्षन्ते इति जीवनत्यजः वीराः तेषां च । किमु । लक्ष्य व्याजः, शरव्य च । अस्ति । नास्त्येवेत्यर्थः । **श्लेषसंकीर्णोऽर्थान्तरन्यासः** ॥

अग्रतः कृतशिखण्डिताण्डवो
भीष्ममेष शुचिमुज्झितैः शरैः ।
वञ्चयन्वलितजिष्णुकार्मुको
वासरोऽर्जुनविकासमासदत् ॥ ११ ॥

**अग्रत इति** ॥ एष वासरः वर्षादिवसः । वलितं वक्रितं प्राप्तं

जिष्णोः इन्द्रस्य कार्मुकं धनुः यस्मिन् स तथोक्तः । पक्षे वलित जिष्णु जयशीलं च कार्मुकं येन सः । अग्रतः प्रथमतः । कृतं शिखण्डिनां मयूराणां ताण्डवं नटनं येन यस्मिन्वा सः । पक्षे अग्रतःकृतः पुरस्तादवस्थापितः यः शिखण्डी तन्नामा द्रुपदपुत्रः तस्य ताण्डवं उत्साहः युद्धाभिनयो वा यस्य स तथोक्तः । उज्झितैः विसृष्टैः । शरैः जलैः, बाणैश्च । भीष्मं भयंकरं अत्युग्रमित्यर्थः । शुचिं ग्रीष्मम् । पक्षे, शुचि परिशुद्धम् । भीष्मं भीष्माचार्यं शन्तनुपुत्रं पितामहम् । वञ्चयन् शमयन् पक्षे प्रतारयन् सन् । अर्जुनानां ककुभाख्यवृक्षाणां विकासं पत्रफलादिसमृद्धिम् । पक्षे, अर्जुनस्य मध्यमपाण्डवस्य विकास शोभां तत्साम्यमिति यावत् । आसदत् प्राप्तवान् । आसीदतेर्लुङ् ॥

आन्ध्यमन्तरभितापकन्दली-
मश्रु निश्वसितमप्ययोगिनाम् ।
आरचय्य विववार वारिदो
धूमपावकजलानिलात्मताम् ॥ १२ ॥

**आन्ध्यमिति** ॥ वारिदः मेघः । अयोगिनां विरहिणाम् । आन्ध्य अन्धत्वं कर्तव्यमूढतां च । अन्तः मनसि । अभितापस्य संतापस्य कन्दलीं नवाङ्कुरं समूहं वा । अश्रु बाष्पम् । निश्वसित निश्वासमपि । आरचय्य उत्पाद्य । धूमपावकजलानिलात्मतां धूमाग्निजलवायुरूपत्वम् । विववार विवृतवान् । 'धूमज्योतिःसलिलमरुतां संनिपातः क्व मेघः' इति मेघसंदेशे ॥

क्रीडया दिवि तटित्कृपाणिका-
वल्लिषु व्यतिहतासु वारिदैः ।

विश्लथा इव विभावसोः कणाः
शक्रगोपनिकराश्चकाशिरे ॥ १३ ॥

**क्रीडयेति** ॥ वारिदैः । दिवि आकाशे । क्रीडया लीलया । तटितः विद्युत एव कृपाणिकावल्लयः लतासदृशाः खड्गाः तासु । व्यतिहतासु परस्परं संघट्टितासु । मेघेषु विद्युद्भिः शस्त्राशस्त्रि कुर्वाणेष्वित्यर्थः । विश्लथाः विकीर्णाः । विभावसोः कणाः अग्निकणाः स्फुलिङ्गाः इव । शक्रगोपानां तन्नाम्ना प्रसिद्धानां कीटविशेषाणां निकराः समूहाः । चकाशिरे भान्ति स्म ॥

केचनानिलवशात्करोपला
द्योतलात्तरलिता दिशां मुखे ।
नासिकाभरणमौक्तिकश्रियो
नाटिकां क्षणमिवाललम्बिरे ॥ १४ ॥

**केचनेति** ॥ अनिलवशात् वायुवेगवशात् । द्योतलात् आकाशप्रदेशात् । तरलिताः चञ्चलिताः विकीर्णा इत्यर्थः । केचन । करोपलाः वर्षोपलाः करकाः । दिशां ककुभां कासाञ्चन स्त्रीणां च । मुखे अग्रभागे वदने च । नासिकाभरणमौक्तिकानां नासाभूषणमुक्ताफलानां श्रियः लक्ष्म्याः । नाटिकां नटन तादृशमुक्तासादृश्यमित्यर्थः । क्षणमिव क्षणकालम् । आललम्बिरे आश्रयन्ति स्म । 'मौक्तिकस्रजः' इति पाठान्तरम् । **निदर्शना उत्प्रेक्षा च** ॥

विष्वगम्बुदविधुन्तुदो रुषा
चर्वति स्म रविशर्वरीविटौ ।

शक्रगोपकरकोपलच्छला-

त्सृक्कणा स विचकार तत्कणान् ॥ १५ ॥

**विष्वगिति** ॥ विष्वङ् सर्वतोव्यापी अम्बुदः मेघ एव विधुंतुदः राहुः। रुषा कोपेन। रविः सूर्यः शर्वरीविटः निशानायकश्चन्द्रः एतौ। चर्वति स्म चर्वितवान्। सः अम्बुदविधुन्तुदः। शक्रगोपकरकोपलच्छलात् शक्रगोपानां वर्षोपलानां च व्याजेन। तत्कणान् क्रमेण सूर्यचन्द्रलवान्। सृक्कणा ओष्ठप्रान्तेन। विचकार विकिरति स्म। विष्वगिति क्रियाविशेषणं वा। **सापह्नवोत्प्रेक्षा** ॥

अम्बरान्निपतितैः करोपलै-

राहतिव्यतिकरस्पृशोऽवनेः।

शक्रगोपवपुषा समन्ततो

विश्लथः क्षतजविप्रुषां चयः ॥ १६ ॥

**अम्बरादिति** ॥ अम्बरात् आकाशात्। निपतितैः। करोपलैः। करकाभिः। आहतेः प्रहारस्य व्यतिकरं सबन्धं स्पृशति भजतीति तस्याः। अवनेः भूमेः। क्षतजविप्रुषां रक्तबिन्दूनाम्। चयः समूहः। शक्रगोपवपुषा शक्रगोपशरीरेण तद्व्याजेनेत्यर्थः। विश्लथः विकीर्णः प्रसृत इत्यर्थः ॥

अब्जिनीप्रणयिना हिमद्युते-

रन्वकारि न परं निरूष्मता।

अल्पदृश्यवपुषा पयोमुचा-

मावलीष्वपि च तत्कलात्मता ॥ १७ ॥

**अब्जिनीति** ॥ अब्जिनीप्रणयिना सूर्येण । हिमद्युतेः चन्द्रस्य । निरूष्मता पर औष्ण्याभावमात्रम् । न अन्वकारि न अनुसृतम् । किंतु पयोमुचां मेघानाम् । आवलीषु पङ्क्तिषु । अल्पदृश्यं किंचिद्दृश्यं वपुः स्वरूपं येन तेन तथोक्तेन । अब्जिनीप्रणयिना । तत्कलात्मता चन्द्रकलारूपतापि च । अन्वकारि अनुकृता ।

फेनकञ्चुकजुषो विषोत्किरः
प्रस्तुतोर्मिपवमानफूत्क्रियाः ।
आपगाः फणधरा इवाध्वगा-
न्कुर्वते स्म पथि कुण्ठतक्रमान् ॥ १८ ॥

**फेनेति** ॥ फेनाः डिण्डीराः कञ्चुका निर्मोका इव फेनकञ्चुकाः तान् जुषन्ते प्राप्नुवन्तीति तादृशाः। पक्षे फेनानिव कञ्चुकान् जुषन्त इति तथा। विषं जलं उत्किरन्ति प्रवाहयन्तीति तथा । पक्षे विषं गरलं उत्किरन्ति वमन्तीति तथा । ऊर्मिपवमानाः तरङ्गवाताः फूत्क्रियाः फूत्कारा इव ऊर्मिपवमानफूत्क्रियाःप्रस्तुताः प्रक्रान्ताः ऊर्मिपवमानफूत्क्रियाः याभिस्तास्तथोक्ताः । पक्षे प्रस्तुताः ऊर्मिपवमानवत् फूत्क्रियाः यैस्ते। आपगाः नद्यः । फणधराः सर्पा इव । अध्वगान् पान्थान् । कुण्ठितः विघ्नितः क्रमः गमनं गमनक्रमो वा येषां तादृशान् । कुर्वते स्म अकुर्वत। मध्येपथं नदीनां प्रवहनात्तदुल्लङ्घनासमर्थाः पथिका आसन्निति भावः । प्रयाणकाले मध्येमार्गं सर्पदर्शनं दुर्निमित्तमिति तदा प्रस्थानं न क्रियत इति लोकाचारः ॥

शश्वदार्द्रितविशोषिताम्बरो
वर्षतोऽपि मरुतोऽध्वगव्रजः ।

पङ्किले किल सशृङ्खलोऽभव-
त्प्राप्तराज्य इव मारवे पथि ॥ १९ ॥

**शश्वदिति** ॥ पङ्किले पङ्कभूयिष्ठे। मारवे मरुप्रदेशसम्बन्धिनि । पथि मार्गे । सशृङ्खलः शृङ्खलासहित इव स्थितः शृङ्खलाबद्ध इव पङ्कात् पादावुद्धृत्य चलितुमशक्त इत्यर्थः । अध्वगव्रजः पथिकसमूहः। वर्षतः वृष्टेः । मरुतः वायुना च । (क्रमेण) शश्वत् मुहुर्मुहुः आर्द्रित आर्द्रीकृतं विशोषितं च अम्बरं वस्त्रं यस्य स तादृशः सन् । प्राप्त राज्यं य स तादृश इव । अभवत् । निर्जलप्रदेशमार्गे पङ्कक्षमस्य जलस्य दर्शनं राज्यप्राप्तिरिव पन्थानां सुखाकरमभूदिति भावः ॥

तिर्यगानतगलं विषाणयो-
र्दीर्णवृष्टि धृतरोमविक्रियम् ।
पार्श्वदेशपरिलीनतर्णकं
गोकुलं निखिलमैक्ष्यताकुलम् ॥ २० ॥

**तिर्यगिति** ॥ निखिल गोकुल समस्तोऽपि गवां समूहः । तिर्यक् तिरश्चीनं यथा तथा आनतः वक्रितः गलः कण्ठप्रदेशः यस्य तत् । विषाणयोः शृङ्गयोः । दीर्णा तत्र पतनेन विशकलिता वृष्टिः धारावर्षः येन तत् । धृता रोमविक्रिया रोमविकारः येन तत् । पार्श्वदेशे पार्श्वभागे परिलीनाः संलग्नाः तर्णकाः वत्साः यस्य तत् तादृश च सत् । आकुलं विह्वलं सोपद्रवमित्यर्थः । ऐक्ष्यत दृष्टम् । **स्वभावोक्तिः** ॥

क्लेदसिक्तमिव वर्षसेचना-
त्किंच कोमलखुरं गवां कुलम् ।

संकुचत्तनु समग्रकम्पनं
तर्णकानधिवनं तदन्वगात् ॥ २१ ॥

**क्लेदेति** ॥ वर्षसेचनात् वृष्टिसेकात्, इदं सर्वत्र हेतुः । क्लेदेन धेनूनां वात्सल्यपूर्वकजिह्वालेहनजनितार्द्रतया लालाजलेन वा सिक्तं आर्द्रितमिव । किं च । कोमलाः मृदवः खुराः शफानि यस्य तत् । संकुचन्ती अल्पीभवन्ती तनुः शरीरं यस्य तत् । समग्रं अधिकं कम्पनं वेपथुः यस्य तत् तादृशम् । तत् । गवां कुलं गोसमूहः । अधिवनं वने । तर्णकान् वत्सान् । अन्वगात् अनुचकार । तर्णकधर्माणां क्लेदसिक्तत्वादीनामत्रापि विद्यमानत्वाद्गोकुल तर्णकसदृशमभूदिति भावः ॥

भानुमम्बुधरबन्धनालये
तापिनं विरचयंस्तपात्ययः ।
अस्य भूरिवसुभागसौ पुरे-
त्यब्जिनीं ध्रुवममज्जयज्जले ॥ २२ ॥

**भानुमिति** ॥ तपात्ययः वर्षाकालः । तापयतीति तापी त तापिन सन्तापकरम् । भानु सूर्यम् । अम्बुधरः मेघ एव बन्धनालयः कारागृह तस्मिन् । विरचयन् कुर्वन् सन् । असौ अब्जिनी । पुरा पूर्वम् । अस्य सूर्यस्य । वसून् किरणान् वसूनि धनानि च भजतीति वसुभाक् । इति एवं मत्वेव । अब्जिनीं पद्मिनीम् । जले । अमज्जयन् मज्जयामास ॥

अम्बुदा न परमश्वितारवा-
स्तद्भवानि तटिनीजलान्यपि ।

सेहिरे न तरणेर्विजृम्भणं
कार्यकारणभिदा कथं भवेत् ॥ २३ ॥

**अम्बुदा इति** ॥ अञ्चितः कृतः आरवः गर्जितं यैस्ते तादृशाः । अम्बुदाः परं मेघाः केवलम् । तरणेः सूर्यस्य । विजृम्भणं प्रकाशम् । न सेहिरे न सोढवन्तः । इति न । किं तु, अञ्चितारवाणि । तद्भवानि मेघभवानि । तटिनीजलानि नदीजलान्यपि । तरणेः नौकायाः । विजृम्भणं गमनागमनरूपम् । न सेहिरे, जलवेगातिशयेन नदीषु नौकानां प्रचारो दुष्करः समभूत् इत्यर्थः । तदेव समर्थयते — कार्येति । कार्यकारणयोः भिदा भेदः । कथं भवेत् न भवेदेवेत्यर्थः । **तुल्ययोगिता श्लेषः अर्थान्तरन्यासश्च** ॥

विद्युतामिव विजृम्भणासहः
शार्ङ्गिणोऽपि शयनीयपन्नगः ।
आतनोदधिपयोधि गाहनं
पामरेषु फणभृत्सु का कथा ॥ २४ ॥

**विद्युतामिति** ॥ शार्ङ्गिणः विष्णोः । शयनीयपन्नगः तल्पभूतः सर्पः आदिशेषोऽपीत्यर्थः । विद्युतां तटिताम् । विजृम्भणासहः विलसनं सोढुमसमर्थ इव । अधिपयोधि समुद्रे । गाहनं मज्जनम् । आतनोत् चकार । पामरेषु प्राकृतेषु । फणभृत्सु सर्पेषु विषये । का कथा जलावगाहनविषये किं पुनर्वक्तव्यमित्यर्थः । **उत्प्रेक्षा काव्यार्थापत्तिश्च** ॥

कामिनीनिवहमानविग्रहः
कालमान्त्रिकपलायितो ग्रहः ।

प्राद्रवत्प्रकटमम्बुभृद्धटं
किं विभिद्य भुवि कीर्णशम्बरम् ॥ २५ ॥

**कामिनीति** ॥ कामिनीनिवहस्य युवतीसमूहस्य यः मानः ईर्ष्याकृतः कोपः तस्य स एव वा विग्रहः यस्य स तथोक्तः युवतीनां प्रणयकोपस्वरूप इत्यर्थः । ग्रहः पिशाचः । कालः वर्षाकाल एव मान्त्रिकः तेन पलायितः प्रद्रावितः सन् । अम्बुभृद्धट मेघमेव जलपूर्णं घटम् । भुवि भूमौ । कीर्णं प्रसृतं शम्बरं जलं यस्मिन् कर्मणि तद्यथा तथा । विभिद्य विपाट्य । प्रकटं सुव्यक्तम् । प्राद्रवत् पलायामास किम् । मान्त्रिकेण पलाय्यमानाः पिशाचाः सत्यापनाय अम्बुघटं पाटयन्तीति स्थितिः । यद्वा तादृशाः पिशाचाः दुश्चेष्टया मन्त्रपूत जलघट पाटयन्तीति स्थितिः । सर्वथा वर्षाकाले मेघेषु वर्षत्सु मानिनीनां मानः स्वयमेव गलित इति तात्पर्यम् । **रूपकं उत्प्रेक्षा च** ॥

पङ्किला न पदवी परं नृणां
द्योसदामपि बभूव दुर्दिने ।
अन्तरा जलकणैरणूपमै-
रार्द्रिते रजसि नीपनिःसृते ॥ २६ ॥

**पङ्किलेति** ॥ दुर्दिने मेघच्छन्ने दिने वर्षाकाल इत्यर्थः । नृणां मनुष्याणाम् । पदवी परं मार्गः केवलम् । पङ्किला पङ्कवती । न बभूव नासीत् । किंतु, द्योसदां देवानामपि । पदवी मार्गः आकाशपथ इत्यर्थः । नीपेभ्यः कदम्बवृक्षेभ्यः निःसृते निर्गत्य ऊर्ध्वं गते । रजसि परागे । अणूपमैः परमाणुतुल्यैः । जलकणैः जलबिन्दुभिः । अन्तरा मध्ये । आर्द्रिते आर्द्रीकृते कर्दमित इत्यर्थः । पङ्किला । बभूव । **अतिशयोक्तिः** ॥

**शाम्यदुच्छ्रितपयोधरश्रिया**
**सकुचत्कुटजदन्तसपदा ।**
**प्रावृषा गलितभूरिवर्षया**
**प्रत्यपद्यत घनस्वरात्ययः ॥ २७ ॥**

**शाम्यदिति** ॥ शाम्यन्ती शमं प्राप्ता उच्छ्रितानां ऊर्ध्वस्थितानां पयोधराणां मेघानां श्रीः संपत्तिः यस्यास्तया तादृश्या । तथा शाम्यन्ती उच्छ्रितयोः उत्तुङ्गयोः पयोधरयोः स्तनयोः श्रीः शोभा यस्यास्तया च । सङ्कुचन्ती विरलीभवन्ती कुटजदन्तानां गिरिमल्लिकानिकुञ्जानां सपत् समृद्धिः यस्यां तया । तथा संकुचन्ती विरला विगलिर्तेति यावत् कुटजदन्तानां कुटजकुसुमसदृशानां दशनानां संपत् यस्यास्तया । यद्वा संकुचन्ती कुटजानि गिरिमल्लिकाकुसुमान्येव दन्ताः तेषां सपत् यस्यां तयेति व्याख्येयम् । ‘दन्तोऽद्रिकटके कुञ्जे दशने’ इति मेदिनी । गलित गतः भूरिः अधिकः वर्षः वृष्टिः यस्यास्तया । तथा गलितः भूरिवर्षः स्वर्णवर्षः यस्याः सा तथोक्ता तया । ‘भूरि स्वर्णे प्रचुरे च’ इति हैमः । प्रावृषा वर्षाकालेन, सुसपन्नपूर्वया रूपवत्या सांप्रतं निस्वया वृद्धया कय चन स्त्रियेत्यपि गम्यते । घनानां मेघानां स्वरस्य गर्जितस्य अत्यय अभावः । घनः धनरूपाद्यभिमानेन गम्भीरः साहंकार इत्यर्थः तादृश यः स्वरः तस्य अत्ययः अभावश्च । प्रत्यपद्यत प्रतिपन्नः । **समासोक्तिः** ।

**श्वेतमानतटिदालि संकुच-**
**च्छातमन्यवशरासवासनम् ।**
**निम्नभूमिषु निलीननिर्झरं**
**निर्मरन्दरसनीपकोरकम् ॥ २८ ॥**

**श्वेतमानेति** ॥ इतः परं पद्यत्रयमेकान्वयम् । एतादृशं दिन ऐक्षी-त्यन्वयः । श्वेतमाना धवलीभवन्ती तटिदालिः विद्युत्पुञ्जः यस्मिंस्तत् । संकुचन्ती विरलीभवन्ती शातमन्यवस्य शतमन्युसंबन्धिनः ऐन्द्रस्य शरासस्य कार्मुकस्य वासना संस्कारः ज्ञानं वा यस्मिंस्तत् । निम्नभूमिषु नीचप्रदेशेषु । निलीनाः प्रवहन्तः निर्झराः गिरिनद्यः प्रवाहा इति यावत् यस्मिंस्तत् । निर्मरन्दरसाः मकरन्दशून्याः नीपकोरकाः कदम्बमुकुलाः यस्मिंस्तत् तथोक्तम् ॥

विप्रकर्षघनसंक्रमं सरि-
द्व्यज्यमानसिकताविजृम्भणम् ।
निस्वताश्रयनिषद्वरोच्चयं
नृत्तकेलिविरमच्छिखावलम् ॥ ५९ ॥

**विप्रकर्षेति** ॥ विप्रकर्षः विरलः घनानां मेघानां संक्रमः संबन्धः यस्मिंस्तत् । सरिद्भिः नदीभिः व्यज्यमानं प्रकाश्यमानं सिकतानां वालु-कानां विजृम्भणं विलासः यस्मिंस्तत् । यद्वा सरित्सु व्यज्यमानं स्वय-मेवाभिव्यक्तीभवत् सिकताविजृम्भणं यस्मिन् तत् । निस्वताश्रयः दारि-द्र्याश्रयः प्रक्षीण इति यावत् तादृशः निषद्वरस्य पङ्कस्य उच्चयः स्तोमः यस्मिंस्तत् । नृत्तकेलेः नर्तनलीलायाः विरमन्तः शिखावलाः मयूराः यस्मिंस्तत् ॥

वारिराशिशयनादुदञ्चितुं
व्याञ्जिताङ्गवलनेन्दिरासखम् ।
ऐक्षि तद्दिनममुक्तसंशयं
हंसपालिभिरपाङ्गिताम्बरम् ॥ ३० ॥

**वारीति** ॥ वारिरशौ समुद्रे शयनात् । उदञ्चितुं उत्थातुम् । व्यञ्जितं कृतं अङ्गवलनं अङ्गपरिवर्तन येन सः व्यञ्जिताङ्गवलनः, तादृशः इन्दिरासखः नारायणः यस्मिंस्तत् । वर्षावसानानन्तरं शरदि शार्ङ्गपाणिरुदधिशयनादुत्तिष्ठतीत्यागमः हंसपालिभिः हंसपङ्क्तिभिः । अपाङ्गित कटाक्षितं अम्बरं आकाशं यस्मिस्तत् । अमुक्तः अगतः संशयः वर्षाकालसन्देहः यस्य तत्, वर्षाकालचिह्नानां तदापि किञ्चिदनुवर्तनादिति भावः । तत् । दिनम् । ऐक्षि दृष्टम् ॥

षट्पदाः पदसमर्पणासहे
प्राक्तने दलचये परिश्लथे ।
कम्पवत्तनु कदम्बसन्ततः
कर्णिकोपरि कथंचिदासत ॥ ३१ ॥

**षट्पदा इति** ॥ षट्पदाः भृङ्गाः । पदसमर्पणासहे चरणनिक्षेप सोढुमक्षमे । कदम्बसंततेः नीपकुसुमसमूहस्य । प्राक्तने प्राचीने । दलचये पत्रसमूहे । परिश्लथे च्युते सति । कर्णिकोपरि बीजकोश्या उपरिभागे । कम्पवती वेपमाना तनुः शरीरं यस्मिन्कर्मणि तद्यथा तथा । कथंचित् प्रयासेन । आसत अतिष्ठन् ।

प्राक्तनेऽपि कुटजे पयोरुहा-
मङ्कुरेऽप्यनुपलब्धशीधवः ।
मारदैवतमुदे मधुव्रता
निश्चयान्निरशनव्रतं दधुः ॥ ३२ ॥

**प्राक्तन इति** ॥ मधुव्रताः भृङ्गाः । प्राक्तने पुरातने जीर्ण इत्यर्थः । कुटजे कुटजकुसुमेऽपि । पयोरुहां पद्मानाम् । अङ्कुरेऽपि, सद्यः समुत्प-

न्नेषु बालेषु पक्ष्मेष्वित्यर्थः । अनुपलब्धः अप्राप्तः शीधुः पुष्पासवः यैस्ते तथोक्ताः सन्तः । मारदैवतमुदे मन्मथदेवतासंतोषाय । निश्चयात् दार्ढ्येन । निरशनव्रतं निराहारनियमम् । दधुः धारयन्ति स्म आचरन्ति स्मेवेत्यर्थः ।

पालिताखिलभुवाम्बुवर्षतः
प्रावृषाजनि शनैः प्रशान्तया ।
पाण्डराम्बुदपरम्परानिभा-
द्भासते स्म दिवि तद्यशोभरः ॥ ३३ ॥

**पालितेति** ॥ अम्बुवर्षतः जलवृष्टेः । पालिता पोषिता अखिला समस्ता भूः भूमिः यया तया । प्रावृषा वर्षाकालेन । शनैः मन्दम् । प्रशान्तया शमं गतया । अजनि जातम् । तस्याः प्रावृषः यशोभरः कीर्तिभारः । पाण्डराणां धवलानां अम्बुदानां मेघानां परम्परानिभात् पङ्क्तिव्याजेन । दिवि आकाशे स्वर्गे च । भासते स्म शुशुभे । **समासोक्तिः सापह्नवोत्प्रेक्षा च** ॥

आस्तिकस्तदनु हल्लकश्रियां
नास्तिकः कुटजनीपसम्पदाम् ।
प्रादुरास विधुभानुमत्त्विषां
प्रत्यवायविगमो घनात्ययः ॥ ३४ ॥

**आस्तिक इति** ॥ तदनु वर्षाकालानन्तरम् । हल्लकश्रियां रक्तकह्लारलक्ष्मीणाम् । आस्तिकः अनुकूलः । कुटजानां नीपानां च संपदां समृद्धीनाम् । नास्तिकः अननुकूलः । विधोः चन्द्रस्य भानुमतः सूर्यस्य च त्विषां

भासाम् । प्रत्यवायस्य निष्प्रकाशत्वरूपस्य पापस्य विगमः अभावः निवर्तक इति यावत् । घनात्ययः शरत्कालः । प्रादुरास आविर्भूतः । अस्ति परलोक इति, नास्ति परलोक इति मतिरस्येति विग्रहे क्रमेण निष्पन्नौ आस्तिकनास्तिकशब्दौ प्रकृते सगुणत्वनिर्गुणत्वद्वारा अनुकूलाननुकूलपरौ ॥

पाथसः समुदयन्प्रशुष्यतः
पद्मगर्भपरिलीनषट्पदः ।
दृष्टगाध इव दर्शयन् शये
कर्दमं कमलिनीगणो बभौ ॥ ३५ ॥

**पाथस इति** ॥ प्रशुष्यतः क्षीणतां गच्छतः । पाथसः जलात् । समुदयन् समुद्गच्छन् । पद्मगर्भे पङ्कजमध्ये परिलीनाः निलीनाः षट्पदाः भ्रमराः यस्य स तादृशः । कमलिनीगणः पद्मिनीसमूहः । गाधः निम्नता मः दृष्टः येन स तथोक्त इव । शये स्वशय्यास्थानभूते सलिलाशये हस्ते च । कर्दम पङ्कम । दर्शयन् सन् । बभौ भाति स्म । लोके हि नद्यादिषु मज्जन् पुरुषः अधस्तलदर्शनप्रत्यायनाय करे कर्दममादाय उदकादुन्मज्जतीति तथात्रोत्प्रेक्षितम् ॥

कुण्ठितेषु कुटजादिषु स्मरः
कोरकेष्वयुतभेदनादिव ।
आददे पुनरदोऽन्यथाकृत
हल्लकाम्बुजमुखाञ्छिलीमुखान ॥ ३६ ॥

**कुण्ठितेष्विति** ॥ स्मरः मन्मथः । कुटजादिषु कुटजकोरकप्रभृतिषु । कोरकेषु कुड्मलेषु । अयुतानां विरहिणां दशसहस्राणां च भेदनात्

पाटनादिव । कुण्ठितेषु निर्वीर्येषु सत्सु । पुनः । अदोऽयथाकृते अमीषां अयुतानां दुःखनिमित्तम् । हल्लकं रक्तकह्लारं अम्बुजं पद्मं मुखं प्रधानभूतं येषां तान् तथोक्तान् । शिलीमुखान् बाणान् । आददे स्वीकृतवान ॥

विद्युतामिव वियोगविक्लवाः
क्वापि मौनभरिताः क्रमात्कृशाः ।
पारणेऽपि पयसः पराङ्मुखाः
पाण्डिमानमवहन्पयोमुचः ॥ ३७ ॥

**विद्युतामिति** ॥ पयोमुचः मेघाः । विद्युतां तटितां नायिकानाम् । वियोगेन विरहेण विक्लवाः विह्वलाः इव । क्वापि कुत्रचित् । (स्थिताः) मौनेन तूष्णींभावेन भरिताः पूर्णाः मौनावलम्बिन इत्यर्थः । क्रमात् । कृशाः कार्श्यमापन्नाः । पयसः जलस्य । पारणे पानेऽपि । पराङ्मुखाः विमुखाः सन्तः । पाण्डिमानं धावल्यम् । अवहन् अधारयन् । **समासोक्तिः उत्प्रेक्षा** च ॥

पन्नगेन्द्रशयनान्तरे परः
पूरुषः समजनिष्ट बोधवान ।
इत्यसंशयमपां निधिं ह्रिया
नाश्रयन्नवनवा नदीप्रियाः ॥ ३८ ॥

**पन्नगेति** ॥ पन्नगेन्द्रशयनान्तरे आदिशेषरूपशय्यामध्ये । परः पूरुषः परमपुरुषो नारायणः । बोधवान् प्रबुद्धः । समजनिष्ट सजातः । इति । ह्रिया लज्जया । नवनवाः नूतनाः । नद्य एव प्रियाः प्रेयस्यः । अपां निधिं भर्तारं समुद्रम् । न आश्रयन् न आश्रयन्ति स्म । असंशयं ध्रुवम् ॥

शान्तिमेयुषि पुरःसमीरणे
कर्दमेऽपि करकोपलैः सह ।
शारदागमसमञ्चितः कुतोऽ-
प्यस्खलद्गतिरभूद्रथो विधेः ॥ ३९ ॥

**शान्तिमिति** ॥ पुरःसमीरणे पौरस्त्यवाते प्रतिकूलवाते च । कर्दमे पङ्केऽपि । करकोपलैः करकाभिः सह । शान्ति शमम् । एयुषि प्राप्तवति सति । विधेः ब्रह्मणः । रथः स्यन्दनभूतः हंसः हसा इत्यर्थः. रथः अवयवश्च मुखमित्यर्थः । 'रथः पुमानवयवे स्यन्दने' इति मेदिनी । शारदः शरत्संबन्धी यः आगमः आगमनं तेन समञ्चितः शोभितः. शारदायाः सरस्वत्याः आगमेन समञ्चितश्च । कुतोऽपि कस्मादपि कुत्रापीति वा । अस्खलन्ती अप्रतिहता गतिः गमनं यस्य स तथोक्तः । अभूत् । कर्दमाद्यभावे हि रथस्य गतिर्निरङ्कुशेति तथा वर्णितम् । शरदारम्भात् हंसा मानसाद्विनिर्गता इति तात्पर्यम् ॥

पालनाय परिबद्धकङ्कणे-
ष्वम्बुदेषु कृशतामपोहितुम् ।
अक्षमा इव भृशं नमन्मुखाः
शालयः कणिशसंभृता बभुः ॥ ४० ॥

**पालनायेति** ॥ कणिशैः सस्यमञ्जरीभिः संभृताः पूर्णाः । शालयः कलमाः । पालनाय स्वपोषणाय । परिबद्धं निबद्धं कङ्कणं प्रतिसरः जलबिन्दुश्च यैस्तेषु । कमिति मान्तमव्ययं जलार्थकम् । अम्बुदेषु मेघेषु । कृशतां कार्श्यम् । अपोहितुं अपनेतुम् । अक्षमाः अशक्ता इव । भृश

अत्यन्तम् । नमत् लज्जानतं मुखं वदनं अग्रभागश्च येषां ते तथोक्ताः । बभुः भान्ति स्म । **उत्प्रेक्षा** ॥

**संचलच्छफरलोचनाः स्खल-**
**च्चङ्क्रमा नववधूजना इव ।**
**अम्बुधिं पतिमशिश्रियञ्छनै-**
**रापगाः शमितनीपदीपिकाः ॥ ४१ ॥**

**संचलदिति** ॥ संचलन्तः तरलाः शफराः मीनाः लोचनानीव यासां तास्तथोक्ताः । अन्यत्र सचलन्ति शफरवत्स्थितानि लोचनानि यासां ताः । स्खलन् चङ्क्रमः गमनं यासां तास्तथोक्ताः । आपगाः नद्यः। नववधूजनाः मुग्धा इव । शमितानि निर्वापितानि नीपानि कदम्ब-कुसुमानि दीपिका इव याभिस्ताः । पक्षे शमिताः नीपानीव दीपिकाः याभिस्ताः। पतिं भर्तारम् । अम्बुधिं समुद्रम् । शनैः मन्दमन्दम् । अशि-श्रियन् आश्रयन्ति स्म ॥

**ऐक्षवैर्मणिभिरन्तिकच्युतैः**
**पाशयन्त्रपरिघूर्णितोज्झितैः ।**
**पत्त्रिणः कलमतः पलायय-**
**न्स्रस्तकेशतति शालिगोपिकाः ॥ ४२ ॥**

**ऐक्षवैरिति** ॥ शालिगोपिकाः कलमरक्षणपराः स्त्रियः । अन्तिके समीपे च्युतैः विकीर्णैः । पाशयन्त्रपरिघूर्णितोज्झितैः पाशयन्त्रमारोप्य भ्रमितैरनन्तरं विक्षिप्तैश्च । ऐक्षवैः इक्षुसंभवैः । मणिभिः रत्नैः मौक्तिकै-रित्यर्थः । पत्त्रिणः पक्षिणः । (कर्म) कलमतः कलमेभ्यः । स्रस्ता धावन-

सम्भ्रमेण विगलितबन्धा केशततिः केशसमूहः यस्मिन्कर्मणि तद्यथा तथा । पलाययन् धावयामासुः । **उदात्तम्** ॥

**कुण्ठितोर्मिभरशृङ्गमापगाः**
**कूलदेशदलनाद्व्यरंसिषुः ।**
**उन्मदान्युरुगभीरनिस्वनं**
**तत्पुनर्वृषकुलानि तेनिरे ॥ ४३ ॥**

**कुण्ठितेति** ॥ आपगाः नद्यः । कुण्ठितानि भग्नानि ऊर्मिभराः तरङ्गपङ्क्तय एव शृङ्गाणि विषाणानि यस्मिन्कर्मणि तद्यथा तथा । कूलदेशदलनात् तीरप्रदेशपातनात । व्यरंसिषुः विरताः । विपूर्वाद्रमतेर्लुङ् । तत् पुनः कूलदेशदलनं तु । उन्मदानि मत्तानि । वृषकुलानि वृषभगणाः । उरुः समधिकः गभीरः गम्भीरश्च निस्वनः शब्दः यस्मिन कर्मणि तद्यथा तथा । तेनिरे अकुर्वन ॥

**आत्तहर्षमनुधावितं गवां**
**मण्डलेन शनकैर्महोधमा ।**
**तूर्णमुन्नमितकर्णवालकं**
**तर्णका ववलिरे तदग्रतः ॥ ४४ ॥**

**आत्तेति** ॥ महत् पीनं ऊधः आपीनं यस्य तेन । गवां धेनूनाम् । मण्डलेन समूहेन । शनकैः ऊधोभागान्मन्दमन्दम् । आत्तः स्वीकृतः हर्षः यस्मिन्कर्मणि तत् सहर्षमित्यर्थः । अनुधावितं पश्चाद्गतम् । तर्णकाः वत्सास्तु । तदग्रतः तासां धेनूनां पुरोभागे । उन्नमिताः उत्क्षिप्ताः कर्णाः श्रोत्राणि वालाः पुच्छानि च यस्मिन्कर्मणि तथा । तूर्णं सवेगम् । ववलिरे वल्गन्ति स्म । **स्वभावोक्तिः** ॥

हंसलोकमवकल्प्य दिक्तटे-
ष्वात्तचङ्क्रमणमम्बुदात्ययः ।
विश्वदिग्जयविनिर्गमे व्यधा-
द्राजहंसमपि रञ्ज्यदाशयम् ॥ ४५ ॥

**हंसेति** ॥ अम्बुदात्ययः शरत्कालः । दिक्तटेषु दिगन्तेषु । हंसलोकं हंसपङ्क्तिम् । आत्तं कृतं चंक्रमणं गमनं येन तं तादृशम् । अवकल्प्य कृत्वा । राजहंसं राजश्रेष्ठं अच्युतरायमपि, हंसविशेषं च । विश्वदिग्जयविनिर्गमे समस्तदिग्विजयार्थं प्रस्थाने । रञ्ज्यन् साभिलाषः आशयः मनः यस्य तं तादृशम् । व्यधात् अकरोत् ।

एकदा तु सचिवो यथाक्रमं
प्रेषितप्रणतराजराजिकम् ।
प्राप्य वेङ्कटविलासमण्टपे
प्रश्रयेण निजगाद पार्थिवम् ॥ ४६ ॥

**एकदेति** ॥ एकदा कदाचित्तु । सचिवः मन्त्री । यथाक्रमं क्रममनतिक्रम्य । प्रेषिता प्रहिता प्रणता विनता राजराजिः नृपतिपङ्क्तिः येन तम् । पार्थिवं अच्युतरायम् । वेङ्कटविलासमण्टपे वेङ्कटविलासनाम्नि आस्थानमण्टपे । प्रश्रयेण विनयेन । निजगाद उवाच ॥

वेत्सि कार्यमखिलं विशेषतो
वेदनीयमिह ते न विद्यते ।
श्रोतुमर्हसि यदुच्यते मया
मन्त्रिधर्म इति मानवेश्वर ॥ ४७ ॥

**वेत्सीति** ॥ हे मानवेश्वर भो राजन् । अखिलं कार्यं समस्तमपि कर्तव्यजातम् । वेत्सि जानासि । इह अस्मिन्कर्तव्यजाते विषये । ते तुभ्यम् । विशेषतः विशिष्य । वेदनीयं बोधनीयम् । न विद्यते नास्ति । विशेषतो वेत्सीत्यन्वयो वा । तथापि, मया । मन्त्रिधर्मः सचिवकृत्यम् । इति । यत् । उच्यते । (तत्) श्रोतुं अर्हसि । मन्त्रिधर्म इति बुद्ध्या श्रोतुमर्हसीति वा ॥

स्वल्पमप्यरिकुलं सुमेधसा
न प्रमाद्यमिति नाथ बुध्यसे ।
हाससाध्यपुरसाधने किय-
त्सङ्गरोपकरणो न शंकरः ॥ ४८ ॥

**स्वल्पमिति** ॥ हे नाथ । सुमेधसा सुबुद्धिना राज्ञा । स्वल्प अल्प निःसारं वापि । अरिकुलं शत्रुसमूहः । न प्रमाद्यं न उपेक्षणीयम् । इति । (त्वमेव) बुध्यसे जानासि । शंकरः परमेश्वरः । हाससाध्यानां अन्ततो हासेनैव साधितानां दग्धानामित्यर्थः पुराणां पुरत्रयस्य साधने निर्वहणे विषये दाह इत्यर्थः । कियन्ति संगरोपकरणानि युद्धसामग्र्यः यस्य स तथोक्तः, न ॥

क्वापि साम भुजधाम कुत्रचि-
त्कल्पते क्षितिप कार्यसम्पदे ।
कोऽपि पुष्यति गिरैव सुभ्रुवां
पादपद्मरणताडनात्परः ॥ ४९ ॥

**क्वापीति** ॥ हे क्षितिप राजन् । कार्यसंपदे कार्यसंपत्तये । क्वापि क्वचित् । साम सान्त्वनं प्रथमोपायः । कल्पते प्रभवति उपयुक्तं भवती-

त्यर्थः । कुत्रचित् क्वचित् । भुजधाम बाहुपराक्रमः । कार्यसंपदे कल्पते । कोऽपि पादपः कश्चिद्वृक्षः मन्दारवृक्ष इत्यर्थः । सुभ्रुवां स्त्रीणाम् । गिरा नर्मवाक्येनैव । पुष्यति विकसति । परः अन्यः । पादपः वृक्षः अशोकस्तु । चरणताडनात् पादाघातात् । पुष्यति । **दृष्टान्तः** ॥

चारलोकविदितारिवर्तनः
शत्रुसाधनकृती स जायते ।
दण्डतोऽवगतगाधनिर्णयः
पाथसोऽवतरणे पटुर्यथा ॥ ५० ॥

**चरेति** ॥ दण्डतः करस्थितया यष्ट्या । अवगतः उपलब्धः गाधस्य निम्नतायाः निर्णयः निश्चयो येन तथोक्तः पुरुषः । पाथसः जलस्य । अवतरणे नद्यादितरणाय तत्र अवतरणे तल्लङ्घने वा । यथा पटुः । (भवति) तथा, (यः) चारलोकेन प्रणिधिजनेन विदितं ज्ञात अरिवर्तनं शत्रुस्थितिः येन स तथोक्तः । सः । शत्रुसाधने शत्रुविजये कृती समर्थः । जायते भवति । **उपमा** ॥

आकलय्य कलहं मिथो रुषा
प्रापयेत्पटुररीन्पराभवम् ।
व्यञ्जयन्व्यतिहतीरदोभुवा
वह्निनेव पवनो वनद्रुमान् ॥ ५१ ॥

**आकलय्येति** ॥ पटुः बुद्धिमान् । मिथो रुषा परस्परकोपेन । कलह भेदम् । आकलय्य उत्पाद्य । रुषा मिथः रहसि कलहं आकलय्येति वा । अरीन् शत्रून् । पवनः वायुः । व्यतिहतीः परस्परसंघट्टनानि ।

व्यञ्जयन् उत्पादयन् सन् । अदोभुवा तादृशवृक्षोत्पन्नेन। वह्निना अग्निना। वनद्रुमान् काननतरूनिव । पराभवं अवमानं नाशमित्यर्थः । प्रापयेत् नयेत् ॥

**साम नैव गणयेज्जडाशयः**
**साध्यते कृतधिया स दण्डतः ।**
**राघवानुनयरोषगोचरो**
**नीरधिर्भवति तन्निदर्शनम ॥ ५२ ॥**

**सामेति** ॥ जडाशयः मूढमनाः, डलयोरभेदात जलाशयः जलनिधिश्च । साम सान्त्वनम् । नैव गणयेत् न बहुमन्येत । सः तादृशः जडाशयः । कृतधिया बुद्धिमता । दण्डतः शिक्षणादेव । साध्यते नियम्यते। राघवस्य रामस्य अनुनयरोषयोः सान्त्वनकोपयोः गोचरः विषयः। नीरधिः समुद्रः । तस्य पूर्वोक्तस्य विषयस्य निदर्शनं दृष्टान्तः । भवति । **अर्थान्तरन्यासः** ॥

**आनतस्य नृपतेर्गरीयसीं**
**क्ष्मां प्रदक्षिणयतः पुरीमिव ।**
**दिक्षु दिक्षु पुरतो भवेद्यशो-**
**लाजवर्षलटहा जयेन्दिरा ॥ ५३ ॥**

**आनतस्येति** ॥ आनतस्य स्वयं विनीतस्य । उत्तमस्येति पाठान्तरम् । गरीयसीं सुविस्तृताम् । क्ष्मां भूमिम् । पुरीं निजनगरीमिव । प्रदक्षिणयतः प्रदक्षिणीकुर्वतः, दिग्विजयाय निखिलामपि भुवं निजनगरीमिव निष्प्रयासं परिभ्रमत इत्यर्थः । नृपतेः राज्ञः । दिक्षु दिक्षु सर्वासु दिक्षु । पुरतः पुरस्तात् । जयेन्दिरा जयलक्ष्मीः । यशांसि कीर्तय एव

लाजाः तासां वर्षे विकिरणे लटहा मनोज्ञा तत्र साभिलाषेति यावत् ।
भवेत् ॥

प्रत्यनीकिबलिसाधनेन यः
प्रीणयेद्यदि पिशाचमण्डलम् ।
आश्रयेत्स परमाहवाङ्गणे
निर्भरं निधिमिवामलं यशः ॥ ५४ ॥

**प्रत्यनीकिबलमिति** ॥ यः यःकश्चित् । प्रत्यनीकिनः शत्रव एव बलिः उपहारः तस्य साधनेन निर्वर्तनेन । पिशाचमण्डलं पिशाचसमूहम् । प्रीणयेत् तर्पयेत् यदि । सः परं स एव । आहवाङ्गणे युद्धभूमौ । निर्मलं विमलम् । यशः कीर्तिम् । निधिं निधानमिव । निर्भरं निष्प्रयासं यथा तथा । निर्भरमिति निधिविशेषणं वा । आश्रयेत् प्राप्नुयात् । निधिभूतस्य बलिं दत्त्वा निधिं उद्धरन्तीति लोकस्थितिः ॥

त्वय्युपेतकमलोदयेऽप्यहो
तोयदा इव शरद्दिनागमे ।
एष्यदाशुविलया यथापुरं
नार्पयन्ति कतिचिन्नृपाः करम् ॥ ५५ ॥

**त्वयीति** ॥ त्वयि । उपेतः प्राप्तः कमलायाः लक्ष्म्याः उदयः सपात्तः येन तस्मिन् तादृशे सत्यपि । कतिचित् नृपाः । उपेतः कमलानां पद्मानां उदयः येन तस्मिन् तादृशे । शरद्दिनागमे शरत्कालारम्भे । तोयदाः मेघा इव । एष्यन् प्राप्स्यन् आशु सत्वरं विलयः नाशः यास्ते तथोक्ताः सन्तः । यथापुरं पूर्ववत् । करं राजदेयं बलिम्, करकां च । न अर्पयन्ति न ददति । अहो इत्याश्चर्ये खेदे वा ॥

छन्नविग्रहतया पलायित-
श्चेल्लपो वसति चेरसीमनि ।
तच्छरण्यधरणीभुजा समं
शिष्य एव स चिरायुषा त्वया ॥ ५६ ॥

**छन्नेति** ॥ छन्नः निह्नुतः विग्रहः शरीरं स्वरूपमित्यर्थः युद्धं च येन तस्य भावेन छन्नविग्रहतया । पलायितः प्रद्रुतः । चेल्लपः चेल्लपराजः । चेरसीमनि चेरराज्यभूभागे । वसति । तत् तस्मात् । सः । चिरायुषा दीर्घायुषा । त्वया । शरण्यः तस्य रक्षकभूतः यः धरणीभुक् राजा चेरनृपतिरित्यर्थः तेन समं सह । शिष्य एव शिक्षणीय एव, उभावपि दण्डनीयावित्यर्थः । तच्छरण्येत्येकं पदं वा । तस्य शरण्य इति तदा अर्थः ॥

प्राक्तनान्निजपदात्परिच्युतः
पालनीय इह पाण्ड्यभूपतिः ।
शिक्षणं मदवतां पुनः सतां
रक्षणं च ननु राजलक्षणम् ॥ ५७ ॥

**प्राक्तनादिति** ॥ अस्मात्पद्यात्पूर्वं एकस्मिन्नादर्शपुस्तके 'आश्रयेत्रियतमप्रकाशतां दीपवद्दिवसनेत्रसंनिधौ ।' इति एकमर्द्धं परमुपलभ्यते । प्राक्तनात् कुलक्रमागतात् । निजपदात् स्वस्थानात् । परिच्युतः प्रभ्रष्टः । पाण्ड्यभूपतिः । इह । पालनीयः रक्षणीयः । मदवतां मत्तानां दुर्जनानामित्यर्थः । शिक्षणं दण्डना । सतां पुनः सज्जनानां तु । रक्षणं पालनं च । राजलक्षणं ननु राजचिह्नं किल राजधर्मः खल्वित्यर्थः । **काव्यलिङ्गम्** । एतदन्तं **रथोद्धता** वृत्तम् ॥

इत्युक्तः सचिवेन रागकणिकामीषद्दृशोरञ्चले
बिभ्राणो दलदम्बुजोदरदरप्राप्तातपश्रीमुषम् ।
संरम्भेण चमूविनिर्गमकृते संदिश्य सेनापतिं
प्रस्थातुं कृतनिश्चयः समजनि प्राग्रेसरो भूभुजाम् ॥ ५८ ॥

**इतीति** ॥ इति एवम् । सचिवेन मन्त्रिणा । उक्तः । भूभुजां राज्ञाम् । प्राग्रेसरः अग्रगामी श्रेष्ठः अच्युतराय इत्यर्थः । दृशोः नेत्रयोः । अञ्चले प्रान्ते । दलतः विकसतः अम्बुजस्य पद्मस्य उदरेण मध्यभागेन दर किंचित् प्राप्तः अधिगतः यः आतपः बालातप इत्यर्थः तस्य श्रियं शोभां मुष्णाति चोरयतीति तां तथोक्तां तादृशशोभासदृशीमित्यर्थः । रागकणिकां आरुण्यलेशम् । बिभ्राणः धारयन् सन् । संरम्भेण कोपेन त्वरया वा । चमूविनिर्गमकृते सैन्यप्रस्थापननिमित्तम् । कृते इति निमित्तार्थकमव्ययम् । सेनापतिम् । संदिश्य आज्ञाप्य । प्रस्थातुं स्वयमपि विजययात्रां कर्तुम् । कृतनिश्चयः दृढाध्यवसायः । समजनि अभूत् । **शार्दूलविक्रीडितम्** ॥

**इति चतुर्थः सर्गः ॥**



# पञ्चमः सर्गः



स समाप्य काल्यनियमं सकलं
जगदण्डलङ्घिजयशङ्खरवः ।
अधिरुह्य वाहनमहन्युचिते
नृपकुञ्जरोऽपि निरगान्नगरात् ॥ १ ॥

**स इति** ॥ सः । नृपकुञ्जरः राजश्रेष्ठः अच्युतरायोऽपि । सकलं समस्तम् । काल्यः कल्ये प्रातःकाले भवः प्रातःकालो वा यः नियमः तम् । समाप्य निर्वर्त्य । उचिते योग्ये शुभ इत्यर्थः । अहनि दिवसे । वाहनं तुरगम् । अधिरुह्य आरुह्य । जगदण्डलङ्घी ब्रह्माण्डातिलङ्घी जयशङ्खरवः विजयशङ्खध्वनिः यस्य स तथोक्तः सन् । नगरात् पुरात् । निरगात् निर्गतः ॥

प्रतिमण्टपं प्रतिरवच्छलतो
गृहदेवतापि च किमन्वकरोत् ।
अथ वेत्रिभिर्निगदितान्पुरतो
जननायकस्य जयजीवरवान् ॥ २ ॥

**प्रतिमण्टपमिति** ॥ अथ अनन्तरम् । वेत्रिभिः वेत्रधारिभिः कञ्चुकिभिः । जननायकस्य अच्युतराजस्य अच्युतराजमुद्दिश्येत्यर्थः । पुरतः प्रथमतः । निगदितान् उक्तान् । जयजीवरवान् 'जय जय चिर जीव'

इत्यादिकान् शब्दान् । प्रतिरवच्छलतः प्रतिध्वनिव्याजेन । प्रतिमण्टपं समस्तेष्वपि मण्टपेषु । गृहदेवता अपि च । अन्वकरोत् अनुचकार किम् ॥

**परुषं व्यराणि पटहेन तथा**

**श्लथमूर्तयः शिखरिणो निखिलाः ।**

**निजपक्षमात्रपरिभावि यथा**

**कथयन्ति वज्रमपि कारुणिकम् ॥ ३ ॥**

**परुषमिति** ॥ पटहेन भेर्या । परुषं उग्रं अत्युच्चैरित्यर्थः । तथा । व्यराणि रणितम् । यथा । निखिलाः समस्ताः । शिखरिणः पर्वताः । श्लथा पटहस्वनासहनेन विशीर्णा मूर्तिः स्वरूपं येषां ते तथोक्ताः सन्तः । निजपक्षमात्रपरिभावि स्वकीयगरुतामेव तिरस्कारकं तन्मात्रच्छेदकमित्यर्थः । वज्रं अशनिमपि । कारुणिकं कृपालुम् । कथयन्ति वदन्ति ॥

**पटहस्वनेन पटुना ककुभः**

**स्फुटदद्रिवेणुविगलन्मणयः ।**

**प्रधनश्रिया परिणयोऽस्य भवे-**

**दिति लाजभर्जनमिवारचयन् ॥ ४ ॥**

**पटहेति** ॥ पटुना निष्ठुरेण । 'पटुस्तीक्ष्णे स्फुटे दक्षे निष्ठुरे निर्दयेऽपि च' इति रुद्रः । पटहस्वनेन आनकशब्देन । स्फुटन्तः विभिद्यमानाः ये अद्रिवेणवः पर्वते विद्यमाना वंशाः तेभ्यः विगलन्तः विशीर्यमाणाः मणयः मौक्तिकानि यासु ताः तादृश्यः । ककुभः दिशः, स्त्रीलिङ्गान्निश्चयश्च । अस्य अच्युतरायस्य । प्रधनश्रिया रणलक्ष्म्या सह । परिणयः विवाहः । भवेत् भविष्यति । इति एव मत्वा । (तदर्थम्) लाजानां भर्जनं शरावप्रक्षेपेण तापनम् । आरचयन् अकुर्वन्निव । **उत्प्रेक्षा** ॥

निजसंगमान्निखिलशैलदरी-
फलितोदये प्रतिरवात्मभवे ।
जलधीन्विगाह्य जयतूर्यरवो
जगदण्डदानमतनु व्यतनोत् ॥ ५ ॥

**निजेति** ॥ जयतूर्यरवः विजयतूर्यध्वनिः, कश्चित्पुमांश्च । निजसङ्गमात् स्वसंबन्धेन । प्रतिरवः प्रतिध्वनिरेव आत्मभवः सुतः तस्मिन् । निखिलानां समस्तानां शैलानां पर्वतानां दर्यां गुहायां स्त्रीलिङ्गात्कस्यांचिन्नायिकायां चेति गम्यते फलितः निष्पन्नः उदयः आविर्भावः यस्य तस्मिन् तादृशे सति । जलधीन् समुद्रान् । विगाह्य प्रविश्य तत्र निमज्ज्येत्यर्थः । जगदण्डाय ब्रह्माण्डाय जगति स्थितेभ्यः सर्वेभ्योऽपीत्यर्थः दान अभिमतवस्तुवितरणम्, जगदण्डस्य ब्रह्माण्डस्य दानं शब्दासहनतया विभेदं च । अतनु अधिकं यथा तथा । व्यतनोत् करोति स्म । पुत्रोत्पत्तौ पित्रा सद्यः स्नात्वा दानमाचर्यत इत्याचारः । **समासोक्तिः** ॥

महिपानवेक्षितनिजागमना-
न्मकुटाञ्चलस्तबकिताञ्जलिकान ।
विभुरन्वकम्पत विलोकनतः
कमलोत्करानिव करैः सविता ॥ ६ ॥

**महिपानिति** । विभुः प्रभुः अच्युतरायः । अवेक्षितं प्रतीक्षितं निजागमनं स्वस्य निर्गमः यैस्तान् तादृशान् । मकुटाञ्चले किरीटकोटौ स्तबकितः स्तबकवदाचरितः तत्र न्यस्त इत्यर्थः अञ्जलिः सयुतौ करौ येषां तान् । महिपान् राज्ञः । विलोकनतः दृष्टया । सविता सूर्यः । करैः

किरणैः । कमलोत्करान् पद्मगणानिव । अन्वकम्पत दयते स्म अनुगृहीतवानित्यर्थः ॥

**अभिशङ्क्य पङ्कजममुष्य मुखं**
**गरुतो वितत्य गगने वलतः ।**
**विजहास हंसमिथुनस्य विभां**
**विशदातपत्रयुगली नृपतेः ॥ ७ ॥**

**अभिशङ्क्येति** ॥ विभोः प्रभोरच्युतराजस्य । विशदा धवला । आतपत्रयुगली छत्रयुग्मम् । विशदातपत्रेत्येकं पदं वा । अमुष्य अस्याच्युतराजस्य । मुखं वदनम् । पङ्कजं पद्मम् । अभिशङ्क्य भ्रान्त्वा । गरुतः पक्षान् । वितत्य विस्तार्य । गगने आकाशे । वलतः भ्रमतः । हंसमिथुनस्य हंसद्वन्द्वस्य । विभां शोभाम् । विजहास परिहसितवती । **भ्रान्तिमान् उत्प्रेक्षा च** ॥

**कशया प्रचोदयितुमप्रभवः**
**प्रभवः स्वपार्ष्णिपरिताडनतः ।**
**तुरगान्प्रचाल्य तुमुलेऽपि मिथ-**
**स्तुहिनांशुवंशमणिमन्वगमन ॥ ८ ॥**

**कशयेति** ॥ प्रभवः अच्युतरायसुहृदः महत्तराः । कशया अश्वताडन्या । प्रचोदयितुं वेगेन गमयितुम् । अप्रभवः अशक्ताः सन्तः । स्वेषां पार्ष्णिभिः पादमूलैः परिताडनतः प्रहारेण । तुरगान् अश्वान् । प्रचाल्य धावयित्वा । मिथः परस्परम् । तुमुले निबिडे संघेऽपि । तुहिनांशुवंशः चन्द्रान्वय एव वंशः वेणुः तस्य मणिं मौक्तिकं चन्द्रवंशश्रेष्ठं अच्युतरायम् । अन्वगमन् अनुसृतवन्तः ॥

विजयोद्यतं विभुमवेक्ष्य भटा
व्यसरन्ससिंहरवसंहतयः ।
उदितं विधुं निकृतये तमसा-
मुदधेरिवोर्मिनिकरा मुखराः ॥ ९ ॥

**विजयेति** ॥ विजयाय दिग्जयाय उद्यतं उद्युक्तम् । विभु प्रभुं अच्युतरायम् । अवेक्ष्य विलोक्य । भटाः योधाः । सिंहरवसंहत्या सिंहनादसंतत्या सह वर्तन्त इति ससिंहरवसंहतयः तादृशाः सन्तः । तमसां अन्धकाराणाम् । निकृतये परिभवाय तन्नाशायेत्यर्थः । उदितं उद्गतम् । विधुं चन्द्रम् । अवेक्ष्य । मुखराः शब्दायमानाः । उदधेः समुद्रस्य । ऊर्मिनिकराः तरङ्गपरम्परा इव । व्यसरन् परितः प्रसृतवन्तः ॥

अखिलैर्बलैरनुगतं विशिखा-
मवगाहमानमवनीरमणम् ।
हरिणीदृशोऽप्यनुययुर्हृदयै-
रवलोकनैरपि च हर्म्यजुषः ॥ १० ॥

**अखिलैरिति** ॥ अखिलैः बलैः रथगजतुरगपदातिरूपैः समस्तैरपि सैन्यैः । अनुगतं अनुसृतम् । विशिखां प्रतोलीम् । अवगाहमानं प्रविशन्त तत्रागतमित्यर्थः । अवनीरमणं भूपतिं अच्युतरायम् । हर्म्यजुषः प्रासादे स्थिताः । हरिणीदृशः युवतयोऽपि । हृदयैः मनोभिः । अवलोकनैः दृष्टिभिरपि च । अनुययुः अन्वगच्छन् ॥

विपणौ बलेन निबिडं वलता
वितर्तिं चतुष्पथपथे भजता ।

स्तिमितेन तोरणमुखे महता

स विलङ्घते स्म शनकैर्नगरीम् ॥ ११ ॥

**विपणाविति** ॥ विपणौ पण्यवीथिकायाम् । निबिडं निरवकाश यथा तथा । वलता संचरता । चतुष्पथपथे शृङ्गाटकमार्गे । विताति विस्तारम् । भजता प्राप्नुवता । तोरणस्य बहिर्द्वारस्य मुखे अग्रभागे । स्तिमितेन निश्चलेन । महता । बलेन सैन्येन सह । सः अच्युतरायः नगरीं विद्यापुरीम् । शनकैः । विलङ्घते स्म विलङ्घितवान ॥

क्वचन प्रचण्डकरिषण्डमयं

क्वचिदप्यभङ्गुरतुरङ्गमयम ।

क्वचनोद्भटायुधभटौघमयं

बलमैक्षि दिक्षु बहुधा विततम् ॥ १२ ॥

**क्वचनेति** ॥ क्वचन कुत्रचित्स्थले । प्रचण्डाः तीव्राः ये करिणः गजाः तेषां षण्डमयं समूहात्मा तत्समूहप्रचुरं वा । एवमेवोत्तरत्रापि विकार प्राचुर्ये वा मयट् । क्वचिदपि । अभङ्गुराः शक्तिमन्तः ये तुरङ्गाः अश्वाः तन्मयम् । क्वचन कुत्रचित्प्रदेशे । उद्भटायुधानां तीव्रशस्त्राणां भटानां योधानां यः ओघः समूहः तन्मयम् । (एवम) बलं सैन्यम् । दिक्षु । बहुधा । वितत विस्तृतम् । ऐक्षि दृष्टम् ॥

परिकीर्णपुष्करपयःकणिका-

प्रसरावसिक्तनिजपार्श्वयुगाः ।

करिणो ययुः कदलिकामरुता

विनिवारितश्रमवियत्पथिकाः ॥ १३ ॥

**परिकीर्णेति** ॥ करिणः गजाः । परिकीर्णानां विक्षिप्तानां पुष्करपयसः शुण्डाग्रस्थितजलस्य कणिकानां बिन्दूनां प्रसरेण व्याप्त्या अवसिक्त आर्द्रीकृतं निजपार्श्वयुगल स्वपार्श्वद्वयं येषां ते तथोक्ताः । कदलिकामरुता ध्वजवातेन । विनिवारितश्रमाः अपनीतक्लमाः वियत्पथिकाः आकाशचारिणः येषां ते तथोक्ताश्च सन्तः । ययुः अगच्छन ॥

भरिता रजोभिरुपरि प्रसृतैः
करिणस्तृणीकृतघनापघनाः ।
हरिदन्तगन्धकरिणां सरणी-
रभजन्त भूभरणतन्त्रवताम ॥ १४ ॥

**भरिता इति** ॥ तृणीकृतः तिरस्कृतः घनस्य मेघस्य अपघनः अङ्ग येस्ते तथोक्ताः । करिणः गजाः । उपरि स्वोपरिभागे । प्रसृतैः व्याप्तैः । रजोभिः धूलिभिः । भरिताः पूर्णाः सन्तः । भूभरणतन्त्रवतां भूभारोद्वहनैककर्मणां भूभारोद्वहनसिद्धान्तिनां वा । हरिदन्तगन्धकरिणां दिगन्तेषु विद्यमानानां मत्तगजानाम । सरणीः मार्गान् । अभजन्त आश्रितवन्तः ॥

सृणिकोणतः शिरसि हस्तिपकः
प्रहरन्पुरश्चटुलतोत्रिकुलम ।
अपथं निनाय समदं द्विरदं
परुषोदितेन परिधाव्य जनान ॥ १५ ॥

**सृणीति** ॥ हस्तिपकः आधोरणः । समदं मत्तम । द्विरद गजम । शिरसि मस्तके । सृणिकोणतः अङ्कुशाग्रेण । प्रहरन् ताडयन् सन् । जनान् । परुषेण निष्ठुरेण उदितेन वचसा । परिधाव्य प्रद्राव्य । पुरः

अग्रतः । तोत्रं गजतोदनदण्डः एषामस्तीति तोत्रिणः चटुलं चञ्चलं धावदित्यर्थः तोत्रिणां कुलं यस्मिंस्तत् तादृशम् । अपथं अपन्थानं मार्ग एव यो न भवति तं प्रदेशमित्यर्थः । निनाय गमितवान् । चटुलतोत्रिकुलमिति क्रियाविशेषणं द्विरदविशेषणं वा ॥

अवटेऽवतारितभरौघ इव
द्रुतमुन्नते द्विगुणभार इव ।
शकटं समे पथि चकर्ष धृता-
धृतभूरिभार इव भद्रगणः ॥ १६ ॥

**अवट इति** ॥ भद्रगणः वृषभसमूहः । अवटे निम्ने । पथि मार्गे । द्रुतं शीघ्रम् । अवतारितः अवरोपितः भरौघः यस्य स तथोक्त इव । भटौघ इति पाठान्तरम् । उन्नते उच्छ्रिते । पथि । द्विगुणः द्विरुक्तः भारः यस्य स तादृश इव । समे निम्नोन्नततारहिते । पथि । धृताधृतः तथा भासमानः भूरिः अधिकः भारः यस्य स इव । शकटं अनांसि । चकर्ष कर्षति स्म ॥

वहमानवाहलहरीनिवहे
वसुधा निमज्ज्य बलवारिनिधौ ।
निजगाद निर्भरपरागभुजो-
ऽमनेन गाधमदसीयमिव ॥ १७ ॥

**वहमानेति** ॥ वसुधा भूमिः । वहमानः प्रवहन् वाहानां अश्वानामेव लहरीणां कल्लोलानां निवहः समूहः यस्य तस्मिन् । बलं सैन्यमेव वारिनिधिः समुद्रः तस्मिन् । निमज्ज्य मङ्क्त्वा । निर्भरः निबिडः यः परागः

रजः स एव भुजः तस्य उन्नमनेन उत्क्षेपणेन । अङ्कीयं बलवारिनिधि-संबन्धि । गाधं निम्नताम् । निजगाद उवाचेव ॥

अभिपाति हस्तयुगलेन रजो
निखिलासु दृष्टिषु निवारयितुम् ।
अपटुः शचीपतिरदूयत य-
त्फलिता किमस्य परदारगतिः ॥ १८ ॥

**अभीति** ॥ शचीपतिः इन्द्रः । हस्तयुगलेन भुजद्वयेन । निखिलासु सर्वासु । दृष्टिषु लोचनेषु । अभिपाति अभिपतनशीलम् । रजः धूलिम् । निवारयितुं निवर्तयितुम् । अपटुः अशक्तः सन् , हस्तद्वयस्यैव सद्भावेन सकललोचनाच्छादनासंभवात् देवत्वेन निर्मीलनासंभवाच्चेति भावः । यत यस्मात् । अदूयत विषण्णोऽभवत् । (तत्) अस्य इन्द्रस्य । परदारगतिः परदारगमनं अहल्याव्यतिकर इत्यर्थः । फलिता दुःखोत्पादनेन फलवती किम् । परदाररतिरिति पाठान्तरम ॥

निबिडं पतत्सु रजसां निवहे-
ष्वधिनन्दनोपवनमभ्रधुनौ ।
अभिधानमर्थवददोजनुषो-
रजनिष्ट भूमिरुहपङ्कजयोः ॥ १९ ॥

**निबिडमिति** ॥ अधिनन्दनोपवनं नन्दनारामे । अभ्रधुनौ गङ्गायां च । रजसां परागाणाम् । निवहेषु समूहेषु । निबिडं निरन्तरं यथा तथा। पतत्सु सत्सु । अदोजनुषोः । नन्दनगङ्गासमुत्पन्नयोः । भूमिरुहपङ्कजयोः वृक्षपद्मयोः । अभिधानं नाम । अर्थवत् भूमौ रोहतीति पङ्काज्जायत इति च व्युत्पत्तेरनुगमात्सार्थकम् । अजनिष्ट बभूव ॥

फणिनायकः फणानिमग्नमणी-
पटलो बले परिचले प्रबले ।
असकृच्छिरोविनिमयादवनीं
वहति स्म वामनसिरालगलः ॥ २० ॥

**फणीति** ॥ प्रबले बलीयसि । बले सैन्ये । परिचले गच्छति सति । फणिनायकः सर्पराजः । फणेषु स्फटासु निमग्नानि उपरिभारविमर्देन अन्तःप्रविष्टानि मणीपटलानि रत्नगणाः यस्य स तादृशः । वामनः संकुचितः सिरालः सिराविष्टः प्रव्यक्तनाडिक इत्यर्थः गलः कण्ठः यस्य स तथोक्तः सन् । अवनीं भूमिम् । असकृत् पुनः पुनः । शिरसां मस्तकानां विनिमयात् परिवर्तनात् परिवर्तनं कृत्वेत्यर्थः । वहति स्म उवाह ॥

विभुनामुना विलसता परितः
सकलं प्रकाश्य चतुरङ्गबलम् ।
स्फुटविश्वरूपमहिमातिशयः
पुरुषोऽजनिष्ट पुनरुक्त इव ॥ २१ ॥

**विभुनेति** ॥ परितः समन्तात् । सकलम् । चतुरङ्गबलं चतुरङ्गसैन्यम् । प्रकाश्य प्रकटीकृत्य । विलसता विराजता, वौ पक्षिणि गरुडे लसता च । अमुना । विभुना प्रभुणा अच्युतरायेन. सर्वव्यापिना च । स्फुटः व्यक्तः सर्वैर्ज्ञात इत्यर्थः विश्वरूपमहिमातिशयः विश्वरूपदर्शनेन माहात्म्याधिक्यं यस्य स तादृशः । पुरुषः परमपुरुषो नारायणः । पुनरुक्तः द्विः कथित इव अनुकृत इवेत्यर्थः । अजनिष्ट जातः, विश्वरूपधारिणं नारायणं समस्तलोकप्रकाशनेनानुचकारेत्यर्थः ॥

अथ वेदिकाममरमौलिमणे-
रवधूतमन्दरमहेन्द्रगिरिम् ।
शनकैरगाहत स चन्द्रगिरिं
नगरीं श्रिया हसितनाकपुरीम् ॥ २२ ॥

**अथेति** ॥ अथ । सः अच्युतरायः । अमरमौलिमणेः भगवतो देवदेवस्य । वेदिकां वितर्दिकां स्थानभूतामित्यर्थः । अवधूतौ औन्नत्यादिना निराकृतौ मन्दरमहेन्द्रपर्वतौ यया ताम् । श्रिया सपदा । हसिता परिहसिता नाकपुरी अमरावती यया तां तथोक्ताम् । चन्द्रगिरिं तन्नाम्नीम् । नगरीं पुरीम् । शनकैः मन्दम् । अगाहत प्रविवेश ॥

अखिलानि तत्र विनिवेश्य बला-
न्यविलम्बितं समवरुह्य हयान् ।
हरिपादभक्तिमवलम्ब्य नृणा-
मधिपोऽध्यरुक्षदहिराजगिरिम् ॥ २३ ॥

**अखिलानीति** ॥ नृणां अधिपः अच्युतरायः । तत्र चन्द्रगिरिनगरे । अखिलानि समस्तानि । बलानि सैन्यानि । विनिवेश्य स्थापयित्वा । हयान् अश्वान् । समवरुह्य अवतीर्य । हरिपादभक्तिं नारायणस्य चरणारविन्दयोः भक्तिम् । अवलम्ब्य आश्रित्य । अहिराजगिरिं शेषाद्रिम् । अध्यरुक्षत् आरुरोह ॥

ज्वलितैर्दिवार्कमणिभिर्निशि यः
स्फुटमोषधीभिरधिशृङ्गतटम् ।

**सफणामणीगण इवार्थवती-**
**मभिधामहीन्द्रगिरिरित्ययते ॥ २४ ॥**

**ज्वलितैरिति** ॥ यः शेषाद्रिः । अधित्यकातट शिखरप्रदेशे । दिवा अहनि । ज्वलितैः दीप्तैः । अर्कमणिभिः सूर्यकान्तैः । निशि रात्रौ । ( ज्वलिताभिः ) ओषधीभिः ज्योतिर्लताभिः । सफणामणीगणः स्फटारत्नसहित इव । अहीन्द्रगिरिः शेषाद्रिः । इति । अभिधां नामधेयम् । अर्थवतीं सार्थिकाम् । स्फुट व्यक्तं यथा तथा । अयते प्राप्नोति वहतीत्यर्थः । स्फुटमिति ज्वलितैरित्यत्रान्वेति वा ॥

**क्षितिपालमण्डलकिरीटमणी-**
**परिशीलनादिव पदद्वितयम् ।**
**अयमक्षमिष्ट वृषभाद्रिशिला-**
**स्वतिकर्कशासु निजमर्पयितुम् ॥ २५ ॥**

**क्षितीति** ॥ अयम् । क्षितिपालमण्डलस्य नृपतिसमूहस्य किरीटमणीषु मकुटरत्नेषु परिशीलनात् परिचयादिव । अतिकर्कशासु अतिकठिनासु । वृषभाद्रिशिलासु वृषभशैलपाषाणेषु । निजं स्वकीयम् । पदद्वितयं चरणयुगम् । अर्पयितुं निधातुम् । अक्षमिष्ट शक्तोऽभूत् ॥

**परिणीः क्षितेरथ कृतस्नपनः**
**परिधाय धौतसिचयद्वितयम् ।**
**अवगाहते स्म मणिधाम हरे-**
**रदसीयचित्तमपि भक्तहितः ॥ २६ ॥**

**परिणीरिति** ॥ अथ । क्षितेः भूमेः । परिणीः नायकः अच्युतरायः ।

कृत स्नपनं येन स तथोक्तः सन् । धौतं निर्मलं क्षालितमित्यर्थः सिचयद्वितयं वस्त्रयुग्मम् । परिधाय वसित्वा । हरेः विष्णोः । मणिधाम रत्नखचितम् आलयम् । अवगाहते स्म प्रविवेश । भक्तहितः भक्तानुकूलो हरिरपि । अदर्सीयं अच्युतरायसम्बन्धि चित्तं मनः । अवगाहते स्म ॥

वपुषा वलाहकवलारिशिला-
वहमानरोचिरवमानपुषा ।
अवतारयन्तमहिमांशुसुता-
मपरां पदादमरसिन्धुमिव ॥ २७ ॥

**वपुषेति** ॥ इत आरभ्य चतुःश्लोकी एकान्वया । वलाहकः मेघः वलारिशिला इन्द्रनीलरत्नं एतयोः वहमानानां प्रसरतां रोचिषां कान्तीनां अवमानं तिरस्कारं पुष्णाति करोतीति तेन । वपुषा शरीरेण । पदात् चरणात् । अमरसिन्धुं गङ्गामिव । अपरां अन्याम् । अहिमांशुसुतां सूर्यपुत्रीं यमुनाम् । अवतारयन्त प्रवर्तयन्तमिव स्थितम् ॥

नमतामिवान्ध्यहरणाय नृणां
नवरोचिषाञ्जनविशेषपुषम् ।
जगतीमिवार्पयितुमादधतं
जठरेषु वन्ध्यसुदृशां क्रमशः ॥ २८ ॥

**नमतामिति** ॥ नवरोचिषा नूतनकान्तिविशेषेण । नमता प्रणमतां भक्तानामित्यर्थः । नृणां मनुष्याणाम् । आन्ध्यस्य अन्धत्वस्य हरणाय नाशनाय । अञ्जनविशेषं विशिष्ट कज्जलं पुष्णाति संचिनोतीति तम् । क्रमशः क्रमेण । (नमन्तीनाम्) वन्ध्यसुदृशां अनपत्यानां स्त्रीणाम् ।

जठरेषु उदरेषु । अर्पयितुं निधातुम् । जगतीं भुवनम् । आदधतं धारयन्तमिव कुर्वाणमिव वा स्थितम् । शेषाद्रिनाथो हि भक्तानन्धाननन्धान् वन्ध्याश्च पुत्रवतीरनुगृह्णातीति सुप्रसिद्धम् ॥

प्रथमानचित्फलगुरुं द्युतरुं
मुनिमानसाम्बरचरं मुदिरम् ।
भवतारणिं प्रणमतां तरणिं
श्रुतिशाखिकाग्रसुखिनं शिखिनम् ॥ २९ ॥

**प्रथमानेति** ॥ प्रथमाना वर्द्धमाना प्रसिद्ध्यन्ती वा या चित् ज्ञानं तदेव फलं तेन गुरुं अधिकं तत्परिपूर्णमित्यर्थः । द्युतरुं कल्पवृक्षम् । मुनीनां मानसं मन एव अम्बरं आकाशः तत्र चरतीति तादृशम् । मुदिरं मेघम् । प्रणमतां भक्तानाम्। भवतारणिं संसारसमुद्रोत्तारिकाम् । तारणिशब्दोऽप्यस्तीति कल्पद्रुमे द्रष्टव्यम् । तरणिं नावम् । श्रुतिशाखिकाग्रसुखिनं वेदशाखाग्रे सुखेनासीनम् । शिखिनं मयूरम् । उपनिषत्प्रतिपाद्यमित्यर्थः ॥

अजमव्यपायमजरं जगता-
मवनैकतानमनिदानदयम् ।
अभिवन्द्य कामफलदं धरणे-
रधिभूः समारभत वर्णयितुम् ॥ ३० ॥

**अजमिति** ॥ अजं अजन्मानम् । अव्ययायं अनिधनम् । अजरं जरारहितम् । जगतां लोकानाम् । अवने रक्षणविषये एकतानं अनन्यवृत्तिकम् । अनिदाना निरुपाधिका दया कृपा यस्य तं तादृशम् ।

कामफलदं यथाभिलषितसमस्तवस्तुप्रदं भगवन्तं हरिम् । अभिवन्द्य नमस्कृत्य । धरणेः भूमेः । अधिभूः नेता अच्युतरायः । वर्णयितुं स्तोतुम् । आरभत उपचक्रमे ॥

> जनिसंहृतिस्थितिकृते जगतां
>
> श्रममेक एव न भजामि पुरा ।
>
> इति किं त्रिधैव स भवानभव-
>
> द्विधिरित्युमेश इति विष्णुरिति ॥ ३१ ॥

**जनीति** ॥ जगतां भुवनानाम् । जनिः उत्पत्तिः संहृतिः संहारः स्थितिः रक्षणं एतन्निमित्तम् । कृते इत्येकारान्तमव्ययं निमित्तार्थकम् । श्रमं प्रयासम् । एक एव असहायः सन्नेव । न पुरा भजामि न भक्ष्यामि न आश्रयिष्यामि । इति इति मत्वा । स भवान् पूज्यः त्वम् । विधिः ब्रह्मा, इति । उमेशः शिवः, इति । विष्णुः, इति । त्रिधा एव अभवत् किम् ॥

> अनिलोऽनलः सलिलमिन्दुरिनः
>
> ककुभो नभो वसुमतीत्यखिलम् ।
>
> फणभृत्फणाग्रनटनस्य विभो
>
> भवता विभाति बहुरूपमिदम् ॥ ३२ ॥

**अनिल इति** ॥ विभो हे प्रभो । अनिलः वायुः । अनलः अग्निः । सलिलं जलम् । इन्दुः चन्द्रः । इनः सूर्यः । ककुभः दिशः । नभः आकाशम् । वसुमती भूमिः । इति । इदं अखिलं एतत्समस्तम् । फणभृतः कालियसर्पस्य फणाग्रे नटनं नर्तनं यस्य तस्य कालियमर्दनं कृतवतः

इत्यर्थः । यद्वा अहीन्द्रगिरिशिखरमधिवसत इत्यर्थः । भवतः तव । बहुरूपं नानाविधं स्वरूपम । विभाति । बहुरूपमिद भवतो विभातीति वा ॥

अनुपाधिकोक्तिरधिदैववती
जगती स्थितिप्रलयसर्गवती ।
अपवर्गवैभववती विलस-
त्यपि मण्डली शमवतां भवता ॥ ३३ ॥

**अनुपाधिकेति** ॥ अनुपाधिकोक्तिः निरुपाधिक वचः वेदा इत्यर्थः । भवता त्वया । अधिदैववती साधिष्ठातृका सनाथेत्यर्थः । विलसति । भवता । जगती भुवनम् । स्थितिः, प्रलयः नाशः, सर्गः सृष्टिः, अस्या अस्तीति स्थितिप्रलयसर्गवती । विलसति । शमवतां शमिनां योगिनाम् । मण्डली गणोऽपि । भवता । अपवर्गस्य मोक्षस्य वैभव महिमा अस्या अस्तीति तादृशी । विलसति ॥

परितोषणं यदिह भक्तनिधे
भवतस्तदन्यमरुतां च भवेन् ।
दृढमूलसेकविधिरेव तरो-
र्विटपौघसेचनविधिर्न कथम् ॥ ३४ ॥

**परितोषणमिति** ॥ हे भक्तनिधे भक्तानां निक्षेपवन्मनोरथपूरक । इह अस्मिन्लोके । भवतः तव । यत् परितोषणं संतोषजनको व्यापारः । तत् । अन्यमरुतां च देवतान्तराणामपि । परितोषणम् । भवेत् । तरोः वृक्षस्य । दृढं यत् मूलं तस्य सेकविधिः सेचनकर्मैव । विटपौघस्य शाखासमूहस्य सेचनविधिः सेकक्रिया । कथं कुतः । न । **दृष्टान्तः** ॥

दयिने मुनीन्द्रहृदयोदयिने
हरये सुराहिततमोहरये ।
दरिणे पयोधितनयादरिणे
भवते नमो निगमलोभवते ॥ ३५ ॥

**दयिने इति** ॥ दयिने दयालवे । मुनीन्द्रहृदये उदयिने उदयवते । सुराहिताः सुरशत्रवः असुरा एव तमांसि अन्धकाराणि तेषां हरये सूर्याय तन्नाशकायेत्यर्थः । दर शङ्खः अस्यास्तीति तस्मै दरिणे । पयोधितनयायां समुद्रकन्यायां लक्ष्म्यां आदरिणे आदरवते । निगमलोभवते वेदलुब्धाय श्रुतिप्रियायेत्यर्थः । भवते तुभ्यम् । नमः । अस्त्विति शेषः ॥

सनकादियोगिशरणाय नमो
जगतीनिवासजठराय नमः ।
निगमागमान्तनिलयाय नमो
नलिनोत्पलेशनयनाय नमः ॥ ३६ ॥

**सनकादीति** ॥ सनकादीनां सनकप्रमुखानां योगिनां शरणाय शरण्यभूताय । नमः । जगतीनिवासः लोकनिवासभूतः जठरः उदरं यस्य तस्मै । नमः । निगमाः वेदाः आगमाः शास्त्राणि तेषां अन्ते निलयः वासस्थानं यस्य तस्मै । नमः । नलिनोत्पलेशनयनाय सूर्यचन्द्रनयनाय । नमः ॥

मुचुकुन्दमोक्षद मुकुन्द जग-
त्त्रयमूलकन्द मुनिबृन्दनिधे ।

इति तं सुपर्णरथमेष भवा-

र्णवकर्णधारमभिवर्णितवान ॥ ३७ ॥

**मुचुकुन्देति** ॥ मुचुकुन्दस्य तन्नाम्नो राज्ञः मोक्षद मोक्षदायिन् । मुकुन्द मोक्षप्रद । जगत्त्रयस्य त्रयाणां लोकानां मूलकन्द मूलभूतकन्दवत्कारणभूत । मुनिवृन्दस्य मुनिसमूहस्य निधे । इति । सुपर्णरथं गरुडवाहनम् । भवार्णवस्य संसारसमुद्रस्य कर्णधार नाविकम् । तं भगवन्तं श्रीनिवासम् । एषः अच्युतरायः । अभिवर्णितवान् स्तुतवान् ॥

महिमस्तवाभिनवमाल्यभृतो

मधुसूदनस्य मकुटाद्गलिताम् ।

स्रजमग्रहीत्सविनयं नृपतिः

समरश्रियो वरणदामसखीम् ॥ ३८ ॥

**महिमेति** ॥ नृपतिः अच्युतरायः । महिमस्तवः वैभवस्तुतिरेव अभिनवमाल्यं अम्लानमाला तत् बिभर्ति धारयतीति तस्य । मधुसूदनस्य भगवतो विष्णोः । मकुटात् किरीटात् । गलितां च्युताम् । समरश्रियः रणलक्ष्म्याः । वरणदाम्नः वरणमाल्यस्य सखीं वयस्यां तत्तुल्यामित्यर्थः । स्रज मालाम् । सविनय विनयेन सह । अग्रहीत् गृहीतवान् ॥

असहायमौक्तिकमहाभरणे

विभुनार्पिते क्व विनुमो यदिमे ।

अनघे श्रुतिद्वयमभूषयतां

श्रुतिभूषणस्य च सुपर्वमणेः ॥ ३९ ॥

**असहायेति** ॥ विभुना प्रभुणा अच्युतरायेन । अर्पिते उपहारीकृते । असहायमौक्तिकमहाभरणे एकमुक्तात्मके श्रेष्ठ भूषणे ( कर्मणी ) (वयम्) क्व विनुमः कथं स्तुर्वामः । यत् यस्मात् । अनघे निर्दोषे । इमे असहायमौक्तिकमहाभरणे । ( कर्तृणी ) श्रुतिभूषणस्य वेदाभरणस्य कर्णालङ्कारस्य च । सुपर्वणां देवानां मणेः रत्नस्य देवश्रेष्ठस्य, सुपर्वणः शोभनपर्ववतः वेणोः उत्पन्नः मणिः रत्नं मौक्तिकमित्यर्थः तस्य च, भगवतः श्रीनिवासस्येत्यर्थः । श्रुतिद्वय श्रोत्रयुगम् । अभूषयतां अलङ्कृतवन्तौ ॥

उदिताब्जमुल्लसितचक्रमसा-
वुदरस्थसर्वभुवनाभ्युदयम् ।
गुहतीर्थमत्र कुरुते स्म गिरौ
नरकापहं नलिननाभमिव ॥ ४० ॥

**उदितेति** ॥ उदितानि उत्पन्नानि अब्जानि यस्मिंस्तत् तथोक्तम् , पक्षे उदितं अब्जं शङ्खः यस्य तम् । उल्लसितानि सविलासानि चक्राणि चक्रवाकाः यस्मिंस्तत् तादृशम् , पक्षे उल्लसितं विलसितं चक्रं चक्रायुधं यस्य तम् । उदरस्थानां मध्यस्थितानां सर्वेषां सकलानां भुवनानां जलानां अभ्युदयः अभिवृद्धिः यस्य तत् , पक्षे उदरस्थानां कुक्षिस्थानां सर्वेषां भुवनानां जगतां अभ्युदयः यस्य तम् । नरकं अपहन्ति अपनयतीति तत् , पक्षे नरकं नरकासुरं अपहन्तीति तम् । नलिननाभं पद्मनाभं नारायणमिव स्थितम् । गुहतीर्थम् । अत्र अस्मिन् शेषाद्रौ । कुरुते स्म अकुरुत ॥

**महता प्रभालिवलयेन मही-**
**पतिनार्पितेन फणिशैलपतिः ।**

उपरिश्रितेन्द्रधनुरुल्लसितं
हरितं व्यडम्बयदिवाम्बुमुचम् ॥ ४१ ॥

**महतेति** ॥ फणिशैलपतिः शेषाद्रिनाथः । महीपतिना अच्युतराजेन । अर्पितेन दत्तेन । महता गुरुणा । प्रभालिवलयेन कान्तिपुञ्जसहितेन कटकेन । उपरिश्रितेन स्वोपरिस्थितेन इन्द्रधनुषा उल्लसितं शोभितम् । हरितं नीलम् । अम्बुमुचं मेघम् । व्यडम्बयत् अनुचकार । इवो वाक्यालङ्कारे ॥

श्रवणे कथास्य मननं च मन-
श्चरणे शिरः स्वयमलंकुरुतः ।
इति कुण्डलं पदकमेष हरेः
किमिहार्पयन्मणिकिरीटमपि ॥ ४२ ॥

**श्रवणे इति** ॥ अस्य हरेः । कथा पुण्यचरित तच्छ्रवणमित्यर्थः । श्रवणे कर्णौ । अलंकरोति भूषयति । मनन ध्यान च । मनः हृदयं वक्ष इत्यर्थः । अलकरोति । चरणे हरिपादौ । स्वयं आत्मना । शिरः । अलंकुरुतः । इति इति मत्वा । एषः अच्युतरायः । हरेः विष्णवे । संबन्धसामान्यविवक्षया षष्ठी । कुण्डल कर्णाभरणम् । पदकं कण्ठभूषणम् । मणिकिरीट रत्नखचित मकुटमपि । इह । आर्पयत् दत्तवान् किम् ॥

अनुलेपमाल्यवसनाभरणै-
र्हरिमन्तरन्धतमसेभहरिम् ।
न्यवसाद्गिरौ परिचरन्नियमा-
त्कति चिह्नानि क्ष्मिता धरणेः ॥ ४३ ॥

**अनुलेपेति** ॥ धरणेः क्ष्मिता पृथ्वीपतिः । अन्तः हृदये विद्यमानं

यत् अन्धतमसं गाढान्धकारं अज्ञानमित्यर्थः तदेव इभः गजः तस्य हरिं सिंहं तन्नाशकमित्यर्थः । हरिं श्रीनिवासम् । अनुलेपमाल्यवसनाभरणैः चन्दनमालावस्त्रभूषणैः । नियमात् नियतं यथा तथा । परिचरन् शुश्रूषमाणः सन् । कतिचित् दिनानि कतिपयदिवसपर्यन्तम् । न्यवमत् वसति स्म ॥

अवरुह्य वेङ्कटगिरेः शिखरा-
दधिरुह्य वाहमतिगन्धवहम् ।
स गरीयसीं सकलमुक्तिकरी-
मपि कालहस्तिनगरीमगमत् ॥ ४४ ॥

**अवरुह्येति** ॥ सः अच्युतरायः । वेङ्कटगिरेः । शिखरात् शृङ्गात् । अवरुह्य अवतीर्य । अतिगन्धवहं वायुमतिक्रान्तम् । वाहं अश्वम् । अधिरुह्य । गरीयसीं अतिश्रेष्ठाम् । सकलमुक्तिकरीं सर्वेषामपि मोक्षप्रदाम् । कालहस्तिनगरीं कालहस्त्याख्य पट्टणमपि । अगमत् प्राप ॥

निकषा सुवर्णमुखरीं लहरी-
मुखरीभवद्वितततीरदरीम् ।
कृतधाम धाम निजनामपदा-
ङ्कनमसीमभूम नमति स्म नृपः ॥ ४५ ॥

**निकषेति** ॥ लहरीभिः वीचिभिः प्रवाहैर्वा मुखरीभवन्ती शब्दायमाना वितता विस्तृता तीरदरी कूलगुहा कूलोपान्तस्थनिकुञ्ज इत्यर्थः यस्यास्तां तथोक्ताम् । सुवर्णमुखरीं निकषा सुवर्णमुखर्याख्याया नद्याः समीपे । कृतं धाम स्थानं येन तत् । धाम तेजः उमारमणमित्यर्थः ।

नृपः अच्युतरायः । निजनामपदं अच्युतेति शब्दः अङ्कन चिह्न यस्य सः तथोक्तः, तादृशः सीम्नः अवधिभूतप्रदेशस्य भूमा बाहुल्यं विस्तारः यस्मिन्कर्मणि तद्यथा तथा । समासान्तविधेरनित्यत्वान्न टच् । नमति स्म ननाम, निजनामाङ्कनपूर्वकं पूर्वाधिकं भूभागमुपहारीकृत्य प्रणतवानिति भावः । "निजनामपदाङ्कनसीमसीम" इति पाठान्तरम् । तदा नेजसो विशेषण तत ॥

द्रविणाधिपेन दृढसख्यवता
न च भिक्षुतास्य समतक्ष्यत या ।
अपवारितेयमुपहारितया
नरसात्मजेन नवसीमभुवा ॥ ४६ ॥

**द्रविणेति** ॥ अस्य परमशिवस्य । या भिक्षुता यत भिक्षाकत्व । दृढ-सख्यवता अत्यन्तसुहृदा । द्रविणाधिपेन कुबेरेण । न च समतक्ष्यत न निवर्तिता । इय सेय भिक्षुता । नरसात्मजेन अच्युतरायेण । उपहारितया उपढौकितया । नवसीमभुवा नूतनावधिकेन भूभागेन । अपवारिता निव-र्तिता । 'सख्यवता न च भिक्षुतास्य समशिक्ष्यत या' इति पाठान्तरम् ॥

स विनम्य चन्द्रशकलाभरणं
शिवमञ्जनेभगिरिसंचरणम् ।
अभिवाञ्छितामपि विरिञ्चिमुखै-
र्हरिकाञ्चिनामनगरीमगमत् ॥ ४७ ॥

**स इति** ॥ सः अच्युतरायः । अञ्जनेभगिरिसंचरणं कालहस्ति-गिरिवास्तव्यम् । चन्द्रशकलाभरण इन्दुकलावतसम् । शिवं पार्वतीपतिम् ।

विनम्य नमस्कृत्य । विरिञ्चिमुखैः ब्रह्मादिभिर्देवैरपि । अभिवाञ्छितां अभिलषिताम् । हरिकाञ्चिनामनगरीं विष्णुकाञ्चीपत्तनम् । अगमत् जगाम ॥

अभिजातवैधहयमेधमखा-

न्तरजातमाधिहरमानमताम् ।

कुमुदारविन्दकुलबन्धुदृशं

समुदायमम्बुधिसुताक्षिमुदाम् ॥ ४८ ॥

**अभिजातेति** ॥ इदमनन्तरपद्य चैकान्वयम । अभिजातः रम्य यथाविधि निर्वृत्त इत्यर्थः यः वैधः ब्रह्मणा कृतः हयमेधमखः अश्वमेध-यागः तस्य अन्तरे मध्ये जातं उत्पन्नं अग्निमध्याद्रूपां मुखेनादाय समु-त्थितमित्यर्थः । आनमतां प्रणमतां भक्तानाम् । आधिहर मनोव्यथानि-वर्तकम् । कुमुदारविन्दकुलबन्धुदृश चन्द्रसूर्यलोचन । अम्बुधिसुताया लक्ष्म्याः अक्षिमुदां नेत्रसन्तोषाणाम् । समुदाय समुच्चयम् ॥

परिचर्यया प्रणवशीर्षमणिं

परितोष्य शार्ङ्गिणममुष्य पुरः ।

अधिरूढमौक्तिकतुलापुरुषोऽ-

प्यतुलोऽजनिष्ट सदभीष्टकरः ॥ ४९ ॥

**परिचर्ययेति** ॥ प्रणवस्य शीर्षमणि चूडामणिम । शार्ङ्गिण वरदरा-जम् । परिचर्यया शुश्रूषया । परितोष्य तोषयित्वा । अमुष्य वरदराजस्य । पुरः अग्रभागे । अधिरूढः आरूढः मौक्तिकतुलापुरुषः मुक्तामयः धटाया-मारोपितः पुरुषः पुरुषप्रमाणानि मौक्तिकानीत्यर्थः सदृशपुरुषश्च यस्य सः तादृशोऽपि । सदभीष्टकरः सज्जनानां मनोरथपूरकः अयमच्युतरायः । अतुलः तुलारहितः धटाशून्यः, निःसमश्च । अजनिष्ट जातः । **विरोधाभासः** ॥

पटहोरुभांकरणमन्त्रवशा-
द्गलितस्वगर्वगरलोष्मभराः ।
निभृताः किरातनिकरा नृपते-
र्निहितोपदाश्चरणयोर्न्यपतन ॥ ५० ॥

**पटहेति** ॥ किरातनिकराः व्याधसमूहा एव पन्नगगणा इत्येकदेशविवर्तिरूपकम् । पटहानां भेरीणां भांकरणं भांकारशब्द एव **मन्त्रः** गरुडमन्त्रः तस्य वशः आयत्तता तस्मात् । गलितः प्रच्युतः निवृत्त इत्यर्थः स्वगर्वः स्वदर्प एव गरल विषं तस्य ऊष्मभरः औष्ण्याधिक्य येषां ते तथोक्ताः । निभृताः विनीताः । निहितोपदाः समर्पितोपढौकनाश्च सन्तः । चरणयोः । न्यपतन् निपतितवन्तः प्रणेमुरित्यर्थः ॥

शिखिपिञ्छलाञ्छितशिखण्डभरैः
श्रितधन्वभिः सितवराटगुणैः ।
विशति स्म तैरनुगतो विनया-
दधिपो नृणामरुणशैलपुरीम ॥ ५१ ॥

**शिखीति** ॥ शिखिपिञ्छैः मयूरबर्हैः लाञ्छितः चिह्नितः तद्युक्त इत्यर्थः शिखण्डभरः चूडाभारः येषां तैः । श्रित गृहीतं धनुः चापः यैस्तैः । सितः बद्धः वराटगुणः कपर्दकसूत्र यैस्तैस्तथोक्तैः । तैः किरातैः । विनयात् प्रश्रयेण । अनुगतः अनुसृतः सन् । नृणां अधिपः नराधिपोऽच्युतरायः । अरुणशैलपुरीं अरुणाचलनगरम् । विशति स्म प्रविवेश ॥

भसितानुलेपभजनेन जटा-
पटलार्चिषां च परिशीलनया ।

अविकुण्ठकण्ठरुचिधूमतया-
प्यनलात्मतामभिनयन्तामिव ॥ ५२ ॥

**भसितेति** ॥ इत. पद्यत्रयमेकान्वयम् । भसितानुलेपस्य भस्मोद्धूलनस्यैव भस्मसंसर्गस्य भजनेन आश्रयणेन । जटापटलानां जटाजूटानामेव अर्चिषां शिखानाम्, जटाजूटस्य पीतत्वाद्वह्निशिखासादृश्यमिति बोध्यम् । परिशीलनया परिचयेन तत्संसर्गेण चेत्यर्थः । अविकुण्ठः निरर्गल कण्ठरुचिः गलशोभैव धूमः यस्य तस्य भावेनापि । अनलात्मता अग्निस्वरूपताम । अभिनयन्त सूचयन्तीमिव स्थितम । अरुणाचले अग्निमय शिवलिङ्गमिति प्रसिद्धम् ॥

वरपाशबन्धनवशाद्वशिना-
मवलम्बमानमधिहृत्सुषिरम ।
अभिवेष्टितं गलमहोजतुना-
प्यभिमुद्रितं तममृपोक्तिनिधिम ॥ ५३ ॥

**वरेति** ॥ वरः श्रेष्ठः यः पाशः कर्गस्थिता रज्जुः तस्य यत बन्धन करेण स्वीकरणम, तेन बन्धन नहनं च तस्य वशात आयत्तत्वात । वशिनां जितेन्द्रियाणाम । अधिहृत्सुषिर हृदयकुहरे । अवलम्बमान तिष्ठन्त अवस्रममान च । अवलम्ब्यमानमिति पाठान्तरम । गलमहोजतुना कण्ठकान्तिलाक्षया । अभिवेष्टित मण्डलाकारेण व्याप्तम । अत एव, अभिमुद्रित अपि अभितः चिह्नितं च । अभिवेष्टितमिति मुद्रणक्रियाविशेषण वा । अमृषोक्तीनां सत्यवाचां वेदानामित्यर्थः निधि निधानम । निधेः पाशवन्धभूरन्ध्रनिक्षेपजतुमुद्रादिकं सुप्रसिद्धमिति तथैव वर्णितम ॥

अरुणाचलेशमभिवन्द्य किम-
प्यवधार्य कार्यमथ हस्तगतम् ।
तिरयन्नगाद्विजयतूर्यरवैः
कलशीभवाधिकरणं ककुभम् ॥ ५४ ॥

**अरुणेति** ॥ एतादृशम्, अरुणाचलेशं अरुणगिरिनायकं परमेश्वरम् । अभिवन्द्य नमस्कृत्य । अथ । कार्यं स्वोद्देश्यकार्यम् । हस्तगतं करस्थम् । किमपि बहुभिः प्रकारैः । अवधार्य निश्चित्य । कलशीभवाधिकरणं अगस्त्यावासभूताम् । ककुभं दिशं दक्षिणां दिशमित्यर्थः । विजयतूर्यरवैः जयभेरीध्वानिभिः । तिरयन् आच्छादयन परिपूरयन्नित्यर्थः । अगात् प्रतस्थे ॥

कदलेक्षुकेरकलमैः स्वदृशो-
र्जनितोपदान् जनपदाभ्युदयान् ।
अवलोकयन्नतिशयादवनेः
कमिता समाश्नुत कवेरसुताम् ॥ ५५ ॥

**कदलेति** ॥ अवनेः कमिता अच्युतरायः । कदलैः रम्भावृक्षैः, इक्षुभिः, केरैः नालिकेरैः, कलमैः शालिभिश्च । 'कदलश्च कदल्यसौ' इति व्याडिः । स्वदृशोः निजनेत्रयोः । जनिता सम्पादिता उपदा उपायनं यैस्तान् तथोक्तान् । जनपदाभ्युदयान् देशसंपत्तीः । अतिशयात् विशेषेण । अवलोकयन् पश्यन् सन् । कवेरसुतां कावेरीम् । समाश्नुत प्राप्तवान् ॥

घननालिकेरकदलीवकुल-
क्रमुकाटवीजुषि तदीयतटे ।

पृतनां मुकुन्दनमनाभिमना

निखिलां न्यवेशयदयं नृपतिः ॥ ५६ ॥

**घनेति** ॥ अयं नृपतिः अच्युतरायः । मुकुन्दनमनाभिमनाः श्रीरङ्गनाथमभिवन्दितुमुत्कण्ठितः सन् । निखिलां पृतनां समस्तमपि सैन्यम् । घना निबिडा या नालिकेराणाम्, कदलीनाम्, वकुलानां केसराणाम्, क्रमुकाणां पूगानां च अटवी वनं तां जुषते प्राप्नोतीति तस्मिन् । नदीयतटे कावेरीकूले । न्यवेशयत् स्थापितवान् ॥

पृथुनीतिमार्गपथिकः पृतना-

पदवीश्रमापहृति तत्पयासि ।

कृतमज्जनादिनियमः क्षितिपैः

सह कैश्चिदाश्नुत स रङ्गगृहम् ॥ ५७ ॥

**पृथ्विति** ॥ पृथुनीतिमार्गपथिकः महानीतिमार्गगामी । सः अच्युतरायः । पृतनायाः सेनायाः यः पदवीश्रमः मार्गखेदः तं अपहरति निवर्तयतीति तस्मिन । तत्पयसि कावेरीसलिले । कृतः रचितः मज्जनादिनियमः स्नानादिकृत्यं येन तथोक्तः सन् । कैश्चित् कतिपयैः । क्षितिपैः राजभिः सह । रङ्गगृहं श्रीरङ्गनाथालयम् । आश्नुत प्राप्तः ॥

अपि जागरूकमवने जगता-

मधिभोगिभोगमजहत्स्वपनम् ।

सहजप्रसादमुखचन्द्रतया

प्रथयन्तमन्तरिव भक्तमुदम् ॥ ५८ ॥

**अपीति** ॥ पद्यत्रयमेकान्वयम् । जगताम् । अवने पालने । जाग-

रूकं अनिद्राणमपि । अधिभोगिभोगं शेषशरीरे । अजहत् अविमुञ्चत् स्वपनं निद्रा यं तं तथोक्तम् । सहजप्रसादः नैसर्गिकप्रसन्नतावान् मुखचन्द्रः वक्त्रेन्दुः यस्य तस्य भावेन । अन्तः हृदये ( स्थिताम् ) भक्तमुदं भक्तविषयक सन्तोषम् । प्रथयन्तं प्रकटयन्तमिव स्थितम् ॥

स्वपनानुभूतिसुखमीलितयो-
रपि चक्षुषोरविरतोल्लसितौ ।
स्फुटयन्तमिन्दुपुटकिन्याधिपौ
करसङ्गवद्दररथाङ्गमिषात् ॥ ५९ ॥

**स्वपनेति** ॥ चक्षुषोः नेत्रयोः । स्वपनानुभूतिसुखेन निद्रानुभवानन्देन मीलितयोः मपुटितयोः सतोरपि । करसङ्गवती हस्तस्थिते ये दररथाङ्गे शङ्खचक्रे तन्मिषात तद्व्याजेन । इन्दुः चन्द्रः, पुटकिन्यधिपः कमलिनीपतिः सूर्यः एतौ । अविरतोल्लसितौ नित्योदयौ सदा प्रकाशमानावित्यर्थः । स्फुटयन्त सम्यक् प्रदर्शयन्तम ॥

कलशाम्बुराशिदुहितुः करयो-
र्निजपादपल्लवयुगान्निहितान् ।
अजहद्विलासकमलां कमला-
मिव कल्पयन्तमनमत्स हरिम् ॥ ६० ॥

**कलशेति** ॥ कलशाम्बुराशिदुहितुः क्षीरसागरपुत्र्याः लक्ष्म्याः । करयोः हस्तयोः । निहितात् निक्षिप्तात् । निजपादपल्लवयुगात् स्वकीयचरणकिसलययुगलात् । कमलां लक्ष्मीम् । अजहत् अमुञ्चत् विलासकमलं लीलारविन्दं यां तां तथोक्तामिव । कल्पयन्तं कुर्वाणम् । हरिं रङ्गनाथम् । सः अच्युतरायः । अनमत् प्रणतवान् ॥

मुकुलीकृतेन मुहुरुल्ललना-
कलकङ्कणारवकलापवता ।
शयपद्मकोरकयुगेन शनै-
रचितोरुपीडनविधिं रमया ॥ ६१ ॥

**मुकुलीकृतेनेति** ॥ पद्यद्वयमेकान्वयम् । रमया लक्ष्म्या । मुकुलीकृतेन कोशीकृतेन प्रत्येकमूर्ध्वभागे अधोभागे च निक्षिप्तेनेत्यर्थः । मुहुः अभीक्ष्णम् । उल्ललनया चलनेन कलः मधुरः यः कङ्कणारवः वलयध्वनिः तस्य कलापः सततिः स एव कलापः भूषणं वा अस्यास्तीति तेन । 'कङ्कणारवकलां वहता' इति पाठान्तरम् । शयपद्मकोरकयुगेन हस्तपद्ममुकुलद्वयेन । शनैः मन्द-मन्दम् । रचितः कृतः ऊरुपीडनविधिः ऊरुसंवाहनं यस्य तं तादृशम् ॥

अजमव्ययायमजरं जगता-
मवनैकतानमनिदानदयम् ।
अभिवन्द्य कामफलदं धरणे-
रधिभूः समारभत गन्तुमितः ॥ ६२ ॥

**अजमिति** ॥ अजम् । अव्ययायम् । अजरम् । जगताम् । अवनैकतानम् । अनिदानदयम् । कामफलदं हरिम् । अभिवन्द्य । धरणेः अधिभूः अच्युतरायः । इतः श्रीरङ्गनगरीतः । गन्तुम् । आरभत ॥

नलिनेक्षणांश नरपालमणे
क्षितिमण्डले तव किमस्ति समः ।
अभिगम्य एष हि मयैव विभो
रणकर्म राजति न चासमयोः ॥ ६३ ॥

**नलिनेति** ॥ इदं पद्य सलकनृपोक्तिः। हे नलिनेक्षणांश विष्णोरंशभूत। 'नाविष्णुः पृथिवीपतिः' इति स्मरणादिति भावः। नरपालमणे राजरत्न। क्षितिमण्डले भूवलये। तव। समः तुल्यः। अस्ति किं नास्त्येवेत्यर्थः। हे विभो हे प्रभो। एषः चेरराजः। मयैव हि मयैव खलु, न तु भवतेत्यर्थः। अभिगम्यः अभियातव्यः। असमयोः अतुल्ययोः भवतः चेरराजस्य च द्वयोर्युवयोरित्यर्थः। रणकर्म युद्धक्रिया। न च राजति न शोभते। 'न किं समयोः' इति पाठान्तरं तु समयोः मम चेरस्य चेति व्याख्येयम् ॥

प्रेम्णः पात्रीकुरुष्व प्रियरमण भुवः प्रेषणादेष दोर्भ्यां
नेष्ये प्रेष्यं हि गर्वग्रहिलमिह जवाच्चल्लपं चेरसीम्नः।
प्रस्थाप्येत्युक्तवन्तं सलगनृपसुतं पद्मनाभान्तरङ्गे
रङ्गे भक्त्युत्तरङ्गः कति चन दिवसान्स्थातुमैच्छन्महेच्छः ॥

**प्रेम्णेति** ॥ भुवः प्रियरमण हे भूपते। माम् प्रेषणात् प्रस्थापनेन प्रेम्णः भवत्स्नेहस्य। पात्रीकुरुष्व विषयीकुरु। एषः अयमहम्। गर्वग्रहिलं मदकलुषम्। प्रेष्य भृत्यभूतम्। चल्लपम्। चेरसीम्नः चेरभूभागात्। जवात् वेगेन। इह भवन्निकटे। दोर्भ्यां भुजाभ्यां भुजबलेनेत्यर्थः। नेष्ये आनेष्यामि। इति एवं प्रकारेण। उक्तवन्तं कथितवन्तम्। सलगनृपसुतं सलगराजपुत्रं स्वस्य स्यालम्। प्रस्थाप्य सम्प्रेष्य। महेच्छः महाशयः अच्युतरायः। भक्त्या उत्तरङ्गः अधिकः परिपूर्णभक्तिमानित्यर्थः। पद्मनाभस्य श्रीरङ्गनाथस्य भगवतः पद्मासहायस्य अन्तरङ्गे अन्तरङ्गस्थाने अत्यन्तमभीष्ट इत्यर्थः। रङ्गे श्रीरङ्गनाम्नि दिव्यदेशे। कतिचन दिवसान् कियन्ति चिद्दिनानि कियच्चिरमित्यर्थः। स्थातुं वस्तुम्। ऐच्छत् अभिललाष। **स्रग्धरा** वृत्तम् ॥

**इति पञ्चमः सर्गः** ॥

# षष्ठः सर्गः ।

प्रहितः पयोधिरशनापतिना
सलगेन्द्रसिन्धुरमणेन्दुरयम् ।
अगमद्विलङ्घ्य मधुरां महती-
मथ ताम्रपर्ण्यभिहितां सरितम् ॥ १ ॥

**प्रहित इति** ॥ पयोधिरशनापतिना समुद्रमेखलाया भुवः पत्या अच्युतरायेण । प्रहितः प्रेषितः । अयम् । सलगेन्द्रः सलगराज एव सिन्धुरमणः नदीशः समुद्रः तस्य इन्दुः चन्द्रः सलगनृपपुत्र इत्यर्थः । महतीं गुर्वीम् । मधुरां मधुरापुरीम् । विलङ्घ्य अतिक्रम्य । अथ । ताम्रपर्ण्यभिहितां 'ताम्रपर्णी' इत्यभिधानवतीम् । सरितं नदीम् । अगमत् प्राप्तवान् ॥

पृथुमौक्तिकोपलचयैर्लहरी-
भरपाशयन्त्ररभसोच्चलितैः ।
अभितो मृगीशुककुलाक्रमणा-
दभिपालितान्तिकमहीकलमाम् ॥ २ ॥

**पृथ्विति** ॥ इदमनन्तरपद्यं च पूर्वश्लोकस्थसरितो विशेषणपरम् । अभितः समन्तात् । लहरीभराः ऊर्म्यतिशया एव पाशयन्त्राणि शिलादिप्रेरणाय रज्जुनिर्मितानि यन्त्राणि तैः रभसेन वेगेन उच्चलितैः विक्षिप्तैः । पृथुमौक्तिकोपलचयैः महतां मुक्ताफलानामेव शिलानां समूहैः । मृगीशुक-

कुलाक्रमणात् मृगीणां शुकानां च समूहस्य आक्रान्तेः । अभिपालिताः राक्षिताः अन्तिकमर्हाः कलमाः संनिकृष्टकेदारशालयः यया ताम् । ताम्रपर्ण्यां मुक्ताफलोदय इति प्रसिद्धम् ॥ **समासोक्तिः रूपकं च** ॥

**निबिडोर्मिकापवनशोधनया**
**नियतं पयःपृषतसेचनतः ।**
**शुचिमौक्तिकौघकुसुमप्रकरैः**
**स्वसमागमार्हमुपचारकरीम् ॥ ३ ॥**

**निबिडेति** ॥ निबिडानां निरन्तराणां ऊर्मिकापवनानां तरङ्गवातानां शोधनया मार्जनेन, तरङ्गवातकर्तृकावकराद्यपनयनेनेत्यर्थः । निबिडानां ऊर्मिकाणां पवनैः करणैः शोधनयेति वा । नियतं निश्चितं सम्यगित्यर्थः । पयःपृषतैः जलबिन्दुभिः सेकतः सेचनात् । शुचीनि निर्मलानि यानि मौक्तिकानि मुक्ताः तान्येव कुसुमप्रकराः पुष्पविसराः तैश्च । स्वसमागमार्हं स्वागमनस्यानुगुणं यथा तथा । उपचारकरीं सत्कारं कुर्वाणाम् । एतादृशीं सरितमगमदिति सम्बन्धः ॥

**अभिशङ्क्य हास्तिककराञ्चलतो**
**निजभञ्जनं निकटभूमिरुहः ।**
**प्रतिबिम्बसंपदवलम्बनतः**
**प्रविशन्ति यत्र भयवन्त इव ॥ ४ ॥**

**अभिशङ्क्येति** ॥ निकटभूमिरुहः आसन्ना वृक्षाः । हास्तिकस्य गजसमूहस्य कराञ्चलतः शुण्डाग्रेण । निजभञ्जनं स्वेषां भङ्गम् । अभिशङ्क्य संशय्य । भयवन्तः भीता इव । प्रतिबिम्बसंपदवलम्बनतः प्रतिच्छाया-

सपत्न्याश्रयणेन प्रतिबिम्बव्याजेनेति भावः । यत्र यस्यां ताम्रपर्ण्याम् । प्रविशन्ति ॥

**नभसः प्रसादमवलुण्टयितुं**

**लघु चालिताल्लहरिभोगिमुखान् ।**

**अवपातितैः किमभितो वरणै-**

**रनुबिम्बनैः स्फुरति याम्बुमुचाम् ॥ ५ ॥**

**नभस इति** ॥ या ताम्रपर्णी । नभसः आकाशस्य । प्रसादं नैर्मल्यम् । अवलुण्टयितु चोरयितुम । लघु द्रुतम । चालितात् उपयुक्तात् । लहरिः वीचिरेव भोगिमुखं उरगास्यं नाम किंचिच्चौर्यसाधनमायुधं तस्मात्, तस्य प्रयोगेणेत्यर्थः । अभितः समन्तात् । अवपातितैः विशकलितत्वात्पातितैः । वरणैः किं प्राकाराः किमेते इत्युत्प्रेक्ष्यमाणैः, तद्वत्स्थितैरित्यर्थः । अम्बुमुचां मेघानाम । अनुबिम्बनैः प्रतिबिम्बैः । स्फुरति शोभते ॥

**सलिलभ्रमाविरतजृम्भिकया**

**तटमृत्तिकाहरणदोहलतः ।**

**अपि फेनखण्डसितगण्डतया**

**विवृणोति सत्त्वमिव या विधृतम ॥ ६ ॥**

**सलिलेति** ॥ सलिलभ्रमः जलावर्त एव अविरता सततप्रवृत्ता जृम्भिका मुखव्यादानं तया । तटमृत्तिकायाः तीरमृदः हरणं कर्षणमेव मृत्तिकायाः आहरणं आहारः तत्र दोहलतः अभिलाषेण । फेनखण्डसितगण्डतया फेनखण्डः डिण्डीरपिण्ड एव सितः शुभ्रः गण्डः कपोलः यस्यास्तस्या भावेनापि । या ताम्रपर्णी । विधृतं भृतम । सत्त्वं जन्तुं गर्भमि-

त्यर्थः । विवृणोति प्रकाशयतीव । सत्त्व विवृतमिव विवृणोतीत्यन्वयो वा । गर्भिणीचिह्नानां जृम्भादीनां विद्यमानत्वादियमपि गर्भिणीव भातीति भावः ॥

अवलोक्य यत्पयसि वारिमुचा-
मनुबिम्बमाकलितपङ्कधियः ।
अवगाहनाय पदमर्पयितुं
चकिता भवन्ति मदपेचाकिनः ॥ ७ ॥

**अवलोक्येति** ॥ मदपेचकिनः मत्तगजाः । यस्याः ताम्रपर्ण्याः पयसि जले । वारिमुचां मेघानाम् । अनुबिम्ब प्रतिबिम्बम् । अवलोक्य दृष्ट्वा । आकलिता जनिता पङ्कधीः कर्दमबुद्धिः पङ्कभ्रम इत्यर्थः येषां ते तादृशाः सन्तः । अवगाहनाय अवतरणाय मज्जनाय । पद चरणम् । अर्पयितुं निधातुम् । चकिताः भीताः । भवन्ति । **भ्रान्तिमान्** ।

अलिनां निशम्य कलगानसुधा-
मरविन्दसन्ततिपु कन्दलिताम ।
प्रमदेन या विवृणुते पुलका-
न्प्रथमानशैवलपलाशमिषान् ॥ ८ ॥

**अलिनामिति** ॥ या ताम्रपर्णी । अरविन्दसन्ततिषु पद्मखण्डेषु । कन्दलितां विवृद्धाम् । अलिनां भृङ्गाणाम् । कलगानसुधां मधुरगानामृतम् । निशम्य श्रुत्वा । प्रथमानशैवलपलाशमिषात् बहिः प्रकटीभवन्तीनां दलाकाराणां जलनीलीनां व्याजेन । प्रमदेन सन्तोषेण । पुलकान् रोमाञ्चान् । विवृणुते प्रकाशयति । **सापह्नवोत्प्रेक्षा** ॥

अधिवारिजातमुखमर्पयितुं
मधुपैणनाभितिलकं महितम् ।
प्रतिबिम्बितद्युमणिबिम्बमिषा-
द्वहतीव या मुकुरमूर्मिकरे ॥ ९ ॥

**अधिवारीति** ॥ या । अधिवारिजातमुखं पद्म एव मुखे । महित श्रेष्ठम् । मधुपः भ्रमर एव एणनाभितिलकः कस्तूरीविशेषकं तम् । अर्पयितु न्यसितुम् । प्रतिबिम्बितद्युमणिबिम्बामिषात् प्रतिफलितसूर्यमण्डलव्याजेन । ऊर्मिकरे तरङ्ग एव हस्ते । मुकुरं दर्पणम् । वहति धारयतीव । **रूपकं उत्प्रेक्षा समासोक्तिश्च** ॥

पतदुत्पतज्जलपतद्गुटिका-
विहृतिव्यपाहृतनिमेषतया ।
अभिवृद्धमश्रु किल या भजते
मकरन्दबिन्दुमरविन्दहशि ॥ १० ॥

**पतदिति** ॥ या । पतन्तः अवतरन्तः उत्पतन्तः उड्डयमानाश्च ये जल पतन्तः जलपक्षिणः त एव गुटिकाः गोलिकाः ताभिः या विहृतिः विहार. तया व्यपाहृतः निरासितः निमेषः नेत्रस्पन्दः यस्यास्तस्या भावेन । अरविन्दहशि पद्मरूपे नयने । अभिवृद्ध प्रवृद्धम् । अश्रु किल नेत्रजलमिव । मकरन्दबिन्दुं मधुकणम् । भजते प्राप्नोति । मकरन्दबिन्दुमेव अश्रु भजते किलेति वा ॥ **रूपकं उत्प्रेक्षा च** ॥

शरधारयैव बकचामरव-
त्कुटिलोर्मिचापकुहरोद्गतया ।

प्रतिकूलभेदनकरी प्रथते
स्फुटवाहिनीविलसिता भुवि या ॥ ११ ॥

**शरेति** ॥ बकः बलाकैव चामरं अस्यास्तीति बकचामरवान् कुटिलः चक्रीकृतश्च यः ऊर्मिचापः तरङ्ग एव धनुः तस्य कुहरात् रन्ध्रात् मध्यादिति यावत् उद्गतया निर्गतया । शरधारया जलप्रवाहेणैव बाणवर्षेणैव, बाणाग्रेणेति वा । प्रतिकूल सर्वस्यापि कूलस्य भेदनकरी भेदिका, प्रतिकूलानां शत्रूणां भेदनकरी भेत्री । या ताम्रपर्णी । स्फुटं व्यक्त वाहिनीविलसित नदीविलासः सेनाविलासश्च यस्याः सा तथोक्ता सती । भुवि भूलोके । प्रथते प्रसिद्धा भवति ॥

कुटिलभ्रमालिलगुडभ्रमणा-
च्छफरीकृपाणशतचालनतः ।
अवगर्जनान्नरपतेः सुभटा-
ननुयाति पत्रिभरणादपि या ॥ १२ ॥

**कुटिलेति** ॥ या । कुटिलानां वक्राणां मण्डलाकाराणामित्यर्थ. भ्रमाणां आवर्तानां आलिः पङ्क्तिरेव लगुडभ्रमण यष्टिभ्रमण तस्मात् । शफर्यः मत्स्यविशेषा एव कृपाणा. खड्गाः तेषां शतस्य चालनतः भ्रमणात् । अवगर्जनात् सलिलध्वनेः सिंहनादाच्च । पत्रिणां पक्षिणां बाणानां च भरणात् पोषणात् धारणादपि । नरपतेः राज्ञः । सुभटान् समीचीनान योधान् । अनुयाति अनुकरोति । **उपमा** ॥

अदसीयरोधसि निवेशमसा-
ववकल्प्य दर्पभरितस्य रिपोः ।

व्यसृजद्विमाथकरणाभिमनाः
पृतनापतिं स पुरतो नृपतिः ॥ १३ ॥

**अदसीयेति** ॥ सः असौ नृपतिः सलगराजकुमारः । अदसीयरोधसि ताम्रपर्णीकूले । निवेशं सेनाधिवेशनम् । अवकल्प्य कृत्वा । दर्पभरितस्य गर्वपूर्णस्य । रिपोः शत्रोः । विमाथकरणे नाशने अभिमनाः उत्कण्ठितः सन् । पुरतः पुरस्तात् । पृतनापतिं सेनापतिम् । व्यसृजत् प्रेषयामास ॥

अथ निर्ययौ मतिविपर्ययतो
गिरिदर्यमेयजयतूर्यरवः ।
स च सङ्गराय चतुरङ्गबलै-
स्तिरयन्दिशस्तिरुवटिक्षितिपः ॥ १४ ॥

**अथेति** । अथ अनन्तरम् । सः तिरुवटिक्षितिपः तिरुवटिराजश्च । अनन्तशयननृपतीनां 'तिरुवटि' इति बिरुदनाम । गिरिदरीषु पर्वतगुहासु अमेयः मातुमशक्यः जयतूर्यरवः जयभेरीध्वनिः यस्य तथोक्तः । चतुरङ्गबलैः रथगजतुरगपदातिरूपैः चतुर्विधैः सैन्यैः । दिशः काष्ठाः । तिरयन् आवृण्वानः सन् । सङ्गराय युद्धाय । मतिविपर्ययतः बुद्धिव्यत्यासात् । निर्ययौ निर्गतवान् ॥

उभयोर्व्यराजदुरुसैनिकयोः
क्षणमन्तरालवसुधा वितता ।
विहितोऽवकाश इव वीररमा-
विबुधीस्वयंवरविहारकृते ॥ १५ ॥

**उभयोरिति** ॥ उभयोः द्वयोः । उरुसैनिकयोः महतोः सैन्ययोः ।

वितता विस्तीर्णा । अन्तरालवसुधा मध्यभूभागः । वीररमा वीरलक्ष्मीः विबुध्यः देवस्त्रियः वरणार्थमागता अप्सरस इत्यर्थः तासां स्वयंवरविहारकृते स्वयंवरलीलानिमित्तम् । 'स्वयंवरविवाहकृते' इति पाठान्तरम् । विहितः कल्पितः । अवकाशः प्रदेश इव । क्षणम् । व्यराजत् शुशुभे ॥

पृथगात्मिकां पृतनयोः श्रितयो-
रवकाशभूरजनि या महती ।
युतयोर्मिथो युगपदाक्रमितुं
चकितेव सा चरमभागमगात् ॥ १६ ॥

**पृथगिति** ॥ पृतनयोः उभयोरपि सेनयोः । पृथगात्मिकां पार्थक्येनावस्थितिम् । श्रितयोः प्राप्तयोः स्वस्वभागावस्थितयोः सत्योरित्यर्थः । महती विशाला । या । अवकाशभूः मध्यभूमिः । अजनि जाता । सा भूमिः । पृतनयोः । युगपत् एककाले । मिथः परस्परम् । आक्रमितुं प्रधर्षितुम् । युतयोः संगतयोः सत्योः । चकिता भीतेव । चरमभागं पश्चाद्भागम् । अगात् गता । **उत्प्रेक्षा** ॥

अविकुण्ठवेगहयमण्डलिका-
खुरषण्डताण्डवितमुण्डशतम् ।
भुजदण्डकुण्डलितचण्डधनु-
श्च्युतकाण्डहिण्डितविशुण्डगजम् ॥ १७ ॥

**अविकुण्ठेति** ॥ इतः पद्यचतुष्टयमेकान्वयम् । एतादृशं जन्यं अजनिष्टेत्युत्तरेणान्वयः । अविकुण्ठवेगानां अप्रतिबद्धरयाणां हयानां अश्वानां मण्डलिकायां चक्रभ्रमणे खुरषण्डेन शफसमूहेन ताण्डवितानि नर्तितानि दूरतः क्षिप्तानीत्यर्थः मुण्डशतानि मस्तकशतानि यस्मिंस्तत् ।

भुजदण्डैः बाहुदण्डैः कुण्डलितेभ्यः चक्रितेभ्यः आरोपितमौर्वीकेभ्य इत्यर्थः चण्डेभ्यः क्रूरेभ्यश्च धनुर्भ्यः चापेभ्यः च्युतैः निर्गतैः काण्डैः बाणैः हिण्डिताः दूरतो निरस्ताः विशुण्डाः छिन्नकराः गजाः यस्मिंस्तत् तथोक्तम् ॥

मदधन्यसामभवसैन्यकरो-
परिनुन्नदन्तविधृतान्यभटम् ।
शरपातवीतगुणयोधधनु-
स्त्वरिताधिरोपितसिराततिकम् ॥ १८ ॥

**मदेति** ॥ मदधन्याः मत्ताः ये सामभवाः गजाः तेषां सैन्येन सेनया तत्समूहेनेत्यर्थः करैः शुण्डाभिः उपरि नुन्नाः ऊर्ध्वं क्षिप्ताः दन्तविधृताः दन्तस्यूताश्च अन्यभटाः शत्रुयोधाः यस्मिंस्तत् तादृशम् । शरपातेन बाणपतनेन वीतगुणानि विगतमौर्वीकाणि यानि योधधनूंषि भटचापानि तेषु त्वरितं सवेगं यथा तथा अधिरोपिता मौर्वीत्वेन उपयोजिता सिराततिः नाडीसन्ततिः यस्मिंस्तत् तथोक्तम् ॥

पिशितस्पृहोत्तरलगृध्रगरु-
त्पवनप्रबुद्धशरमुग्धभटम् ।
इतरेतरासिहतवीरकृत-
सुचरीकरग्रहपुनःकलहम् ॥ १९ ॥

**पिशितेति** ॥ पिशितस्पृहया मांसलोभेन उत्तरलानां ऊर्ध्वं तरलानां गृध्राणां पक्षिविशेषाणां गरुत्पवनेन पक्षवातेन प्रबुद्धाः चेतिताः शरमुग्धाः पूर्वं शरपतनेन मूर्च्छामधिगताः भटाः यस्मिंस्तत् तादृशम् । इतरेतरं परस्परं इतरेतरस्य परस्परस्य वा असिना खड्गेन हताः ये वीराः तैः कृतः आरब्धः सुचरीकरग्रहे एकस्याः अप्सरसो विवाहविषये पुनः कलहः यस्मिंस्तत् ॥

अविचारितस्वपरयोधमना-
हतजीवमस्थिरजयापजयम् ।
अजनिष्ट जन्यमनयोर्बलयो-
रपि नारदेन यददृष्टचरम् ॥ २० ॥

**अविचारितेति** ॥ अविचारितस्वपरयोध अनालोचितस्वपक्षपरपक्षभटम् । अनादृतजीवं अगणितप्राणम् । अस्थिरौ जयापजयौ यस्मिंस्तत् । जन्यं युद्धम् । अनयोः । बलयोः सैन्ययोः । अजनिष्ट जातम् । यत् युद्धम् । नारदेनापि । अदृष्टचरं पूर्वं न दृष्टम् ॥

अपरः सरोषमहितेन हतः
पतितोऽपि कुम्भफलकात्करिणः ।
अविलम्बमम्बरचराम्बुजदृ-
क्कुचकुम्भिकुम्भमवलम्बितवान् ॥ २१ ॥

**अपर इति** । सरोष कोपेन सह । अहितेन शत्रुणा । हतः । अपरः शत्रुपक्ष्यः कश्चित् भटः । करिण. गजस्य । कुम्भफलकात् फलकसदृशात् मस्तकात् । पतितः सन्नपि । अविलम्बं सत्वरम् । अम्बरचराम्बुजदृशः देवस्त्रियः कुचः स्तन एव कुम्भिकुम्भः गजमस्तकः तम् । अवलम्बितवान आश्रितवान् ॥

रिपुणा निकृत्तभुज एव परो
न्यपतत्स्वपातितपराक्रमतः ।
अजहद्धनुः क्षणमधो भ्रमणैः
स भुजो ररक्ष युधि तं शयितम ॥ २२ ॥

**रिपुणेति**। परः अन्यः कश्चित्। रिपुणा शत्रुणा। निकृत्तभुजः छिन्नबाहुः सन्नेव। न्यपतत् पतितवान्। सः भुजः खण्डितो बाहुः। धनुः चापम्। अजहत् अमुञ्चन् सन्। अधः भूमौ। भ्रमणैः वलनैः। युधि युद्धे रणभूमावित्यर्थः। शयितं पतितम्। तं भटम्। स्वपातिनः स्वेन खण्डितः यः परः शत्रुः तस्य आक्रमतः आक्रमणात्। क्षणम्। ररक्ष पालितवान्। 'स्वपातिपतदाक्रमतः' इति पाठे तु स्वपातिनां पतितोपरि अवतरतां पततां पक्षिणां आक्रमत इति व्याख्येयम्॥

> महतो मदेभशिरसो दलिता-
> न्मणिभिश्च्युतैः सिकतिले फलके।
> परदारणात्प्रहरणं मसृणं
> समराय कोऽपि समशातयत॥ २३॥

**महत इति**। कोऽपि वीरः। दलितात् विदारितात्। महतः बृहतः। मदेभशिरसः मत्तगजकुम्भात्। च्युतैः गलितैः। मणिभिः मौक्तिकैः। सिकतिले वालुकावति। फलके चर्मणि। परदारणात् शत्रुखण्डनात्। मसृण कुण्ठितधारम्। प्रहरणं आयुधम्। समराय युद्धाय। समशातयत सम्यगुत्तेजितवान्॥

> करकुन्तकोटिदलितात्करिणः
> क्षतजेन कुम्भफलकात्क्षरता।
> अपरो व्यराजदभितः स्नपितो
> विहिताभिषेक इव वीरपदे॥ २४॥

**करेति**॥ अपरः अन्यः कश्चित्। करकुन्तकोटिदलितात् हस्तस्थितस्य प्रासस्य अग्रेण विदारितात्। करिणः गजस्य। कुम्भफलकात् फलकस-

दशात् मस्तकात्। कुम्भयुगलादिति पाठान्तरम्। क्षरता प्रवहता। क्षतजेन रक्तेन। अभितः समन्तात् सर्वावयवावच्छेदेनेत्यर्थः। स्नपितः मज्जितः सन्। वीरपदे वीरस्थाने। विहितः कृतः अभिषेकः पट्टाभिषेकः यस्य स तथोक्त इव। व्यराजत् राजति स्म ॥

**समतासहं शशिकुलेशबलं**
**युधि केरलस्य युगपत्पृतनाम्।**
**प्रसितुं समैहत मदग्रहिलां**
**प्रलयाम्बुराशिपरिभाविरवम् ॥ २५ ॥**

**समतेति** ॥ समतासहं सादृश्यमसहमानं अनुपममित्यर्थः। प्रलयाम्बुराशिपरिभाविरवं प्रलयकालसमुद्रतिरस्कारिगर्जितं च। शशिकुलेशबलं चन्द्रवंशाधीशस्याच्युतरायस्य सैन्यम्। युधि युद्धे। मदग्रहिला दर्पकलुषाम्। केरलस्य चेरराजस्य। पृतनां सैन्यम्। युगपत् एकदैव। प्रसितुं भक्षयितुं नाशयितुमित्यर्थः। ऐहत चेष्टते स्म इयेष वा ॥

**कति चित्करालकरवालिकया**
**कतिचिच्च कुन्तलतया शितया।**
**विशिखैः परे शितमुखैरभव-**
**न्विभुसेनया विदलिता विमताः ॥ २६ ॥**

**कतीति** ॥ विभुसेनया अच्युतरायसैन्येन। कतिचित् कतिपये। विमताः शत्रवः। करालया भयंकरया। करवालिकया खड्गेन। विदलिताः खण्डिताः। अभवन्। कति चिच्च। शितया तीक्ष्णया। कुन्तलतया प्रासवल्लया। विदलिताः अभवन्। परे अन्ये केचन। शितमुखैः तीक्ष्णधारैः। विशिखैः बाणैः। विदलिताः अभवन् ॥

अवकीर्णकर्णकनकाभरणा
हननाजहत्किणगणांसतटाः ।
करतो विनिर्गलितखड्गधनुः-
परिघादिमप्रहरणप्रकराः ॥ २७ ॥

**अवकीर्णेति** ॥ पद्यद्वयमेकान्वयम् । अवकीर्णानि परितः क्षिप्तानि कर्णकनकाभरणानि कनकमयानि कर्णभूषणानि येषां ते तथोक्ताः । हननेन प्रहारेण अजहत्किणगणानि अविगतव्रणजचिह्नसमूहानि असतटानि भुजशिखरप्रदेशाः येषां तथोक्ताः । करतः हस्तेभ्यः । विनिर्गलितानि च्युतानि खड्गः धनुः परिघः लोहबद्धो लगुडभेदः एतदादिमानि प्रहरणानि आयुधानि येषां ते तथोक्ताः ॥

श्लथमौलिवेष्टनदुकूलशिखा-
स्तरणे रणे कुणपभुक्छरणे ।
विपुलांसकूटविगलद्वलया-
श्चिरमस्वपन्सपदि चेरभटाः ॥ २८ ॥

**श्लथेति** ॥ विपुलान् विशालान् असकूटान् अंसशिखरान् विगलत् च्यवमानं वलयं अङ्गदं येषां ते तथोक्ताश्च सन्तः । 'विलसद्वलयाः' इति पाठान्तरम् । चेरभटाः चेरराजयोधाः । श्लथानां शिथिलबन्धनानां च्यवमानानां मौलिवेष्टनदुकूलानां उष्णीषभूतक्षौमाणां शिखाः अञ्चलान्येव आस्तरणानि चित्रकम्बलानि यस्मिन्स्तस्मिन् तथोक्ते । शिखाभिः आस्तरणं आच्छादनं यस्येति वा । कुणपभुजां शवभोजिनां गृध्रगोमायुप्रभृतीनां पिशाचादीनां वा शरणे रक्षितरि गृहे वा । रणे युद्धे । चिरं दीर्घकालम् । अस्वपन् सुप्तवन्तः मृता इत्यर्थः ॥

निहतावशिष्टसुभटानुगतो
विजयिष्णुसैन्यमधिजन्यममुम ।
अभिगम्य चोलपतिनानतवा-
नपरावतारममरेन्द्रतरोः ॥ २९ ॥

**निहतेति** ॥ (चेरराजः) । निहतावशिष्टैः हतशेषैः सुभटैः अनुगतः अनुयातः सन् । अधिजन्यं युद्धे । विजयिष्णुसैन्यं जयशील-सैन्यम् । अमरेन्द्रतरोः कल्पकवृक्षस्य । अपरावतारं मूर्त्यन्तरमिव स्थितं महावदान्यमित्यर्थः । अमुं सलगनृपतिम् । चोलपतिना चोलराजेन सह । अभिगम्य प्राप्य । आनतवान् प्रणतवान् ॥

अयमर्पितस्तव पदाम्बुजयो-
रधमः स तिर्वटिरधर्मपरः ।
इति तं निगद्य समदान्द्विरदा-
नुपदीचकार रयगांस्तुरगान ॥ ३० ॥

**अयमिति** ॥ अधर्मपरः अधर्मासक्तः । अधमः नीचः । अयं सः तिर्वटिः तिरुवटिराजः । तव । पदाम्बुजयोः पादपद्मयोः । अर्पितः त्वां शरणं गत इत्यर्थः । इति । तं सलगनृपतिसुतम् । निगद्य उक्त्वा । समदान् मत्तान् । द्विरदान् गजान् । रयगान् वेगेन गच्छतः । तुरगान् अश्वांश्च । उपदी-चकार उपायनीकृतवान् ॥

अनुगृह्य नम्रमसुरक्षणतः
स्थितिमात्रये तिरुवटिक्षितिपम् ।

अपि पाण्ड्यभूपमदसीयपदा-
भ्यधिकप्रतिष्ठमतनिष्ट नृपः ॥ ३१ ॥

**अनुगृह्येति** ॥ नये नीतिमार्गे। स्थितिमान् निष्ठावान्। नृपः सलगराजकुमारः। नम्र विनतम्। तिरुवटिक्षितिपं तिरुवटिराजम्। असुरक्षणतः प्राणरक्षया। अनुगृह्य। पाण्ड्यभूपं पाण्ड्यराजमपि। अदसीयपदात् तिरुवटिनृपसंबन्धिनः स्थानात् अभ्यधिका प्रतिष्ठा स्थितिः यस्य तम। अतनिष्ट अकुरुत ॥

शयने शयानमुदधिं समया
पदसौरभोर्मिपरिणाहवति।
अथ नन्तुमच्युतमगादवने-
रधिभूरनन्तशयनाभिमुखम् ॥ ३२ ॥

**शयनेति** ॥ अथ। अवनेः अधिभूः पृथ्वीपतिः। उदधिं समया समुद्रसमीपे। पदानां शब्दानां यत् सौरभ परिमलः सौशब्द्यमिति यावत् तस्य ऊर्मीणां वीचीना संपत्तीनामित्यर्थः परिणाहः आभोगः अस्यास्तीति तस्मिन्। शयने आदिशेषे, आदिशेषस्य पतञ्जलिरूपेण शब्दसाधुत्वनिर्णायकत्वादिति भावः। शयानम्। अच्युतं पद्मनाभम्। नन्तु वन्दितुम्। अनन्तशयनाभिमुखं अनन्तशयननामकनगरं अभिमुखीकृत्य तदुद्दिश्येत्यर्थः। अगात् गतः। एतावत्पर्यन्त **प्रमिताक्षरा** वृत्तम् ॥

आवासभूश्चुलकदघ्नमहाम्बुराशे-
रन्तर्मुखस्य हयरत्नखनिः सुमेषोः।

साम्राज्यभूरगरुचन्दनवाटिकाया

मार्गेऽजनिष्ट मलयाद्रिरमुष्य दृष्ट्योः ॥ ३३ ॥

**आवासभूरिति** ॥ चुलकदघ्नः चुलकप्रमाणकः महाम्बुराशिः महासमुद्रः यस्य तस्य । 'चुलकितोदमहाम्बुराशेः' इति पाठान्तरम् । अयमेव च पाठः साधीयान्, द्वयसज्दघ्नचोरूर्ध्वमान एव विधानात् । चुलकितोदः चुलकीकृतजलः महाम्बुराशिः यस्येति तदा व्याख्येयम् । अन्तर्मुखस्य योगिनः अगस्त्यमहर्षेरित्यर्थः । आवासभूः निवासस्थानम् । सुमेषोः मन्मथस्य । हयरत्न अश्वश्रेष्ठः दक्षिणवातः स एव रत्न तस्य खनिः आकरः दाक्षिणानिलजन्मभूमिरित्यर्थः । अगरूणां कालागरूणां चन्दनानां पटीराणां च वाटिकायाः पङ्क्तेः । साम्राज्यभूः चक्रवर्तित्वस्थानं तदुत्पत्तिसंपत्तिभूमिरित्यर्थः । मलयाद्रिः मलयपर्वतः । अमुष्य अस्य राज्ञः । दृष्ट्योः नयनयोः । मार्गे पथि । अजनिष्ट जातः दृष्ट इत्यर्थः । **वसन्ततिलकम्** ॥

वीथीष्वम्बुरुहां विहारनिरता विक्षिप्य धूलीभरं

ताम्रायां तरलोर्मिकाविरचितप्रेङ्खोलिकाकेलिकाः ।

लक्ष्यालक्ष्यरदाः पयःकणमिषाल्लम्बालकाः षट्पदैः

सेनाश्रान्तिमपाहरन्ति शिशवः श्रीखण्डशैलानिलाः ॥ ३४ ॥

**वीथीष्विति** ॥ शिशवः अर्भकाः । श्रीखण्डशैलानिलाः चन्दनाद्रिसमीराः मलयवातपोता इत्यर्थः । 'श्रीगन्धशैल' इति पाठान्तरम् । अम्बुरुहां पद्मानाम् । वीथीषु पङ्क्तिषु वर्त्मसु च । विहारनिरताः क्रीडासक्ताः सन्तः । धूलीभरं रजःपुञ्जम् । विक्षिप्य विकीर्य । ताम्रायां ताम्रपर्ण्याम् । तरलाभिः चञ्चलाभिः ऊर्मिकाभिः वीचिभिः विरचिता कृता प्रेङ्खोलिकाकेलिः डोलाविहारः येषां ते तथोक्ताः । ताम्रायां धूलीभरं

विक्षिप्येति वा । पयःकणमिषात् जलबिन्दुव्याजेन । लक्ष्यालक्ष्यरदा दृश्यादृश्यदन्ताः । षट्पदैः भ्रमरैः । लम्बालकाः लम्बमानचूर्णकुन्तलाश्च सन्तः । सेनाश्रान्तिं सैन्यानां श्रमम् । अपाहरन्ति अपनयन्ति । **रूपकं परिकरश्च** । **शार्दूलविक्रीडितं** वृत्तम् ॥

**मैनाकप्रमुखैर्महीधरकुलैर्माहेन्द्रभीत्याकुलै-**

**र्मत्वा शोषमपामपाङ्गितचमूराजीरजोमण्डलैः ।**

**अभ्युत्थानमिवाचरन्तमसकृत्प्रेङ्खत्तरङ्गच्छला-**

**द्द्राक्षीन्निधिमम्भसां स नयनायामं मिमानं किल ॥३५॥**

**मैनाकेति** ॥ सः नृपतिः । अपाङ्गित दृष्ट चमूराजीरजोमण्डल सैन्य समूहोत्थापितधूलीपटल यैस्तैस्तथोक्तैः । अपां जलानाम् । शोषम् । मत्वा विचार्य । माहेन्द्रभीत्याकुलैः इन्द्रागमन भयेन व्याकुलैः । मैनाक प्रमुखैः मैनाकप्रभृतिभिः । महीधरकुलैः पर्वतसमूहैः सह । महीधरकुलैः अपां शोषं मत्वेति वा । असकृत् मुहुर्मुहुः । प्रेङ्खत्तरङ्गच्छलात् चलता तरङ्गाणां व्याजेन । अभ्युत्थानं अन्यत्र गमनाय उत्प्लवनम् । आचरन्तं कुर्वाणमिव स्थितम् । नयनायामं दर्शनशक्तिदैर्घ्यं स्वनेत्रवैपुल्यं वा । मिमानं किल परिमान्तमिव च स्थितम् । अम्भसां निधिं समुद्रम् । अद्राक्षीत् अपश्यत् । "नयनायामं मिमानः किल" इति पाठान्तरम् । **उत्प्रेक्षा** । **शार्दूलविक्रीडितं** वृत्तम् ॥

**इति षष्ठः सर्गः ॥**



# परिष्कृतिनिवेदनम् ।

महाशयानां नैतदाश्चर्यम, यदमुद्रितस्य ग्रन्थस्य प्रत्यादर्शलेख प्रबंधनादशुद्धानां तदशुद्धिपरिहारपूर्वक समीचीनं पाठमुन्नयतां तदेकायत्तमानसानां व्याख्यातॄणां भूयसा सम्भवन्ति तत्र तत्राक्षरतः पदतो योजनातोऽर्थतो भावतो पाठोद्धरणतश्च प्रमादा इति तादृशेऽस्मिन्नच्युतरायाभ्युदयेऽपि तत्र तत्र पतितानि स्खलितानीति । पर तु पुनः परिशीलनायां यानि नाम सांप्रतमस्फुरन्, तानीदानीं परिह्रियन्ते ।

| पुटः. | पङ्क्तिः. | परिष्कृतम् | पुटः. | पङ्क्तिः. | परिष्कृतम् |
|---|---|---|---|---|---|
| ७ | १७ | यत्तममो | १२८ | १ | रायेण |
| ,, | २१ | भयार्थिनो | ,, | ७ | अलङ्कृतवर्ता |
| ४९. | १० | क्रीडा यस्य | ,, | १३ | मिता: सविलासा: |
| १०७ | ७ | प्रत्यनीकिवर्लीति | | | चक्रा: |
| १०८ | २ | श्चोलपो | १३० | १५ | ङ्कनसीम |
| ,, | ६ | चोलपः चोलराजः । | १३९ | ९ | चोलप |
| ,, | १३ | भूपतिः । | ,, | १४ | चोलपम् । |
| ११८ | २ | मवान्धिनम् । गाध | १४१ | ११ | बिन्दुभिः सेचनत. |
| | | तलस्पर्शी | १४४ | १० | पतद्भु |

प्रथमसर्गे, १२ पद्ये, यो विधुः विमोहिनीं मूर्तिमेत्य सुमनोजनायेत्येवमन्वयो वा । द्वितीयसर्गे, १५ पद्ये, व्याख्याने चक्रुरित्यनन्तर अपहायेत्यारभ्य बहव इत्यन्त प्रमादपतित ततोऽपनेयम् । २६ पद्ये व्याख्याने "अनुकर्तुम् । आदृतः साभिलाषः । अभूत् । पुत्रदर्शनाय निर्निमेषाणि नेत्रसहस्राण्यभिललाषेत्यर्थः" इति व्याख्येयम् । ४० पद्ये "प्रतिबिम्बसंपदासौ" इति पाठ इदानीमुपलब्धः । "संपदा अशोभि इति यत् । असौ" इति व्याख्येयम् । अशोभीति भावे लुङ् । चतुर्थसर्गे, ३० पद्ये "अमुक्तसशयम्" इति ईक्षतिक्रियाविशेषणं वा । पञ्चमसर्गे, ४१ पद्ये "प्रभालिवलयेन 'तिरुवाशि' इति द्रमिडभाषया व्यवह्रियमाणेन प्रभावलिमण्डलेन ।" इति व्याख्येयम् । षष्ठसर्गे, १५ पद्ये, "उरुसैनिकयोः महासैन्ययोः । उभयोः तयोर्द्वयोः" इति व्याख्येयम् ।

## NOTES

ON

# Achyutarayabhyudaya.



अच्युतरायाभ्युदयम्— अच्युतः इति रायः (राजन् is corrupted into राय in Sanskrit dialect) अच्युतरायः; तस्य अभ्युदयं अधिकृत्य कृतं काव्यं or अच्युतरायस्य अभ्युदयः वर्ण्यते अस्मिन् काव्ये इति a work that treats of the elevation (or success) of king Achyutaraya.

## CANTO I.

In accordance with the rules of Rhetoric, that every work in Sanskrit should begin with a benediction (आशिस्) or a salutation (नमस्क्रिया), or a slight indication of the subject-matter of the work (वस्तुनिर्देश), the poet called राजनाथ, the author of this work, makes his salutation to his favourite God Harihara (or Sankaranarayana), a particular form of deity consisting of Vishnu and Siva conjoined, so that the work undertaken by him may be finished without any obstacles. Some

consider that by this Sloka the author makes his salutation to the two different deities, Vishnu and Siva. In that case we must understand the word च after धाम which is to be repeated. The six adjectives here qualify धाम (Acc. sing. neut of धामन्), which is the object of आश्रये। The adjectives नार्लीकाक्षं, नागेशयं and विपुङ्गवध्वजं refer to Vishnu, and the adjectives अर्लीकाक्ष, अगेशयं and पुङ्गवध्वजं refer to Siva. नार्लीकाक्षं (= पुण्डरीकाक्षं) lotus-eyed (नार्लीक = a lotus); अर्लीकाक्ष = having an eye in the forehead (अर्लीक = the forehead). The god Siva is said to have a third eye affixed on his forehead and hence his epithets त्रिलोचन, निटिलाक्ष etc. Note the word अक्षि at the end of a Bah. compound is changed to अक्ष। नागेशय = lying down upon the serpent called Adisesha who is said to have one thousand heads and represented as forming the couch of Vishnu. अगेशय= lying on the mountain *i. e.* Kailâsa which is said to be the residence of Siva. Note that when a noun in the Loc. Case, ending in अ or a consonant and not denoting time, is compounded with शय, वास and वासिन्, Aluk is optional. *Cf.* 'शयवासवासिष्वकालात्।' Panini विपुङ्गवध्वजं वि = a bird; पुङ्गव = a bull *i.e.* the foremost

or chief; hence विपुङ्गव=the king of birds *i.e.* Garuda who is said to be the flag and vehicle of Vishnu; and hence the epithet गरुडध्वज। धाम = lustre *i.e.* the Supreme God; elsewhere it may mean 'residence'. पुङ्गवध्वज=bull-bannered. Siva is said to have a bull for his vehicle and emblem; hence his epithet वृषध्वज। Note गो as the second member of certain compounds is changed to गव। आश्रये 1st per. sing. Pres. atm. of श्रि with आ (to seek refuge with) I conj. Note also the use of the figure called विरोधाभास in this verse. It is a figure of speech in which an apparent incongruity which is merely verbal, is explained away by properly construing the passage. It consists in representing objects as antithetical to one another though in the nature of things they are not so. (as) नार्लीक (नसमास) and अलीक are apparently antithetical; so also are नाग and अग, विपुङ्गव and पुङ्गव। The metre is called श्लोकवृत्त। 'पञ्चम लघु सर्वत्र सप्तमं द्विचतुर्थयोः। षष्ठ गुरु विजानीयादेतत् श्लोकस्य लक्षणम् ॥'

**Sloka 1.** In this verse the author invokes the blessings of God Srinivasa who resides on the Tirupati mountain, upon his patron Achyutaraya, the hero of this work. अव्यात् 3rd per. sing. Bene-

dictive mood of the root अव् (to protect) I conj. par. अपूर्वः = the like of which did not exist before *i.e.* strange or extraordinary. निधिः = a valuable treasure. आगमानां आगम is here used in a double sense, *viz*: religious science or sacred writing; and income. आद्यः (= आदौ भवः) = pre-eminent or foremost. वृषाद्रेः पतिः (put in apposition with निधिः) = the lord of the mount Vrisha *i.e.* the God Srinivasa; the mountain at Tirupati is variously called as वृषाद्रि (or वृषभाद्रि), अञ्जनाद्रि, शेषाद्रि and वेङ्कटाद्रि । अच्युतेन्द्रं = The king Achyutaraya. The word इन्द्र is here used in the sense of a 'king'. निःस्पृहकाङ्क्षित निःस्पृह = those who are free from desires *i.e.* the ascetics The ordinary treasure is wished for only by those who have desires whereas the treasure in the form of God Srinivasa is longed for only by those who are free from desires (*i.e.* wordly ties); hence it is said to be extraordinary (अपूर्वः) । यं refers to निधि । निरञ्जनाः is used in a double sense, viz: 'those who are without the application of collyrium (in their eyes)' and 'those who are free from stain *i.e* the stainless' The ordinary treasure can be seen only by those who apply to their eyes a kind of collyrium prepared by the Siddhas (सिद्धाञ्जन); but

this treasure of God Srínivása can be seen only by those who are free from अञ्जन (i. e. stain); and hence also it is spoken of as extraordinary. क्षमन्ते (from क्षम्=to be able; I conj. atm.) = are able. The metre used in this Canto is, for the most part, उपजाति which is defined thus: स्यादिन्द्रवज्रा ततजास्ततो गौ । उपेन्द्रवज्रा जतजास्ततो गौ ।' 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥' The Upajati metre is formed by the mixture of the two metres Indravajra and Upendravajra in a metre. The metre of the Slokas 16, 30, 35, 44, 52, and 53 is इन्द्रवज्रा; and the metre of the Slokas 21, 27, and 46 is उपेन्द्रवज्रा ।

**2.** In this Sloka the author invokes the blessings of the Goddess Lakshmi upon the king Achyutaraya. धम्मिल्ल = the braided and ornamented hair of a woman tied over the head; शैवाल (also शैवल) = a kind of aquatic plant or moss. अपाङ्ग = the outer corner or angle of the eye; विद्रुम = coral; धन्या (= धन लब्धा)= fortunate or lucky; पितृच्छायतया on account of her resemblance to her father (i.e. the ocean). छाया here means 'likeness' or 'resemblance'. The Goddess Lakshmi resembled her father, the ocean, in the following respects, viz: her braided hair resembled the moss; the outer corners of her eyes resembled the fish; and her lips resembled

coral. According to the science of palmistry a boy bearing the resemblance of his mother and a girl having the likeness of her father are considered to be very fortunate. Hence Goddess Lakshmi bearing resemblance to her father is here spoken of as fortunate (धन्या) । अब्धिकन्या (lit.) = the daughter of the ocean i.e. the Goddess Lakshmi. She is said to have sprung from the milk ocean along with the other precious things when it was churned out for nectar by the gods and demons. Hence the epithet क्षीरसागरकन्यका । The fourteen precious things or jewels that were churned out of the ocean are: 'लक्ष्मीः कौस्तुभपारिजातकसुरा धन्वन्तरिश्चन्द्रमा धेनुः कामदुघा सुरेश्वरगजो रम्भादिदेवाङ्गनाः । अश्वः सप्तमुखो विष हरिधनुः शङ्खोऽमृत चाम्बुधेः रत्नानीह चतुर्दश प्रतिदिन कुर्युः सदा मङ्गलम् ॥' तन्यात 3rd per. sing. Bened. of the root तन् ( = to extend) VIII conj par. अवन्यां (Loc sing. fem. of अवनी) = on earth. श्रिय Learn the declension. अच्युतेन्द्रो: The word इन्दु is here used in the sense of a 'king' as he, by his good and just government, gladdens people like the moon. **3.** Literary works are here spoken of as ornaments and the adjectives here used convey a double meaning so that they may be applied both to the literary works and ornaments. सुवर्णस्पर्शैः (1)consisting

of euphonic syllables or letters. (2) made of gold. शुभनायकाङ्कैः(1)remarkable for their excellent heroes. (According to Sahityadarpana there are 4 main kinds of heroes :— they are: धीरोदात्त, धीरोद्धत, धीरललित and धीरप्रशान्त। By शुभनायक the author means perhaps the धीरोदात्त here). (2) figured with valuable gems or pendants. औज्ज्वल्यवाद्भिः (1) possessed of an elaborate and beautiful form of style of composition. (2)possessed of brilliancy. ध्वनि (1)the first and the best of the three main divisions of काव्य or poetry, in which the implied or suggested sense of a passage is more striking than the expressed sense; or where the expressed sense is made subordinate to the suggested sense. 'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः॥' Kavya-prakasa. (2) the tinkling sound. अश्नुवानैः ( pr. act. par. of अश् V conj. atm )= having. प्रबन्धैः = by the literary works or compositions. प्राचेतसाद्दीन्

Prachetasa is an epithet of Valmiki. He was called Prachetasa *i.e.* the son of Prachetas or Varuna, the god of rain, for the following reason. Once he practised a very severe penance for years together without moving from the place, so that his body was covered up with ant-hills These ant-hills were at last washed away by a great shower of rain and the sage became once more visible to the world. Hence he was called Prachetasa.

But, according to some other authority Prachetasa is a patronymic of Valmiki, he being the son of an ancient sage called *Prachetas*. **आदि** refers to Vyasa and other eminent and ancient poets. **प्रणुमः** *1st per.* pl. Pres. par. of **नु** with **प्र** (to praise) *II* conj. **प्रणौमि —प्रणुवः —प्रणुमः ।** **4.** कालिदास —काल्याः दासः = कालिदासः , the ending **ई** of **काली** is shortened by the following rule:— "If the first member of a compound denoting a proper name or occurring in the Vedic literature ends in **आ** or **ई**, these vowels are, in most cases, shortened" C.f. "ङ्यापोः संज्ञाच्छन्दसो-र्बहुलम्" Panini. Kalidasa, the celebrated author of the Sakuntala, Vikramorvasiya, Malavikagnimitra, Raghuvamsa, Kumarasambhava, meghaduta, Ritusamhara and other works, was a great poet who flourished, it is said, in the sixth Century after Christ. Several arguments go to fix his date as that stated above Bana's reference to this poet in the beginning of his Harshacharitra also shows that he must have flourished before the time of Bana. i. e. before the first half of the seventh Century The date of Vikramaditya's existence is vaguely fixed at the sixth Century after Christ, from the date of the battle of Caru (i.e. 544 A. D.) in which he defeated the Mlechchas. The poet was one of the nine gems of the court of king Vikramaditya. There is a traditional account of Kalidasa, regarding the manner in which he attained his poetic skill

and the name Kalidasa. It runs as follows:—There was a king who had a daughter of extraordinary literary attainments. The king, desiring to have his learned daughter wedded to one of equal learning with her, made a pledge that he would give her in marriage to him who could win her by his literary attainments. Many learned men came to the place and attempted the prize but failed. Thereupon the king's ministers, growing disgusted with seeking after persons of the required attainments, determined, in their extreme anger, to have her married to a dunce. Such a dunce they soon got, who was felling the branch of a tree while he was sitting on it. This was Kalidasa whom they managed to take to the king's palace and, by their schemes, contrived to get married to the princess. Soonafter when she came to know that her husband was after all a dunce, she drove him out of the house. Mortified by this insult, he resorted to the temple of the Goddess Kali, and when that Goddess was out of the temple, he entered it and refused to admit her when she returned, unless she would bless him with great literary skill Finding his resolve and devotion to her, the Goddess inscribed on his tongue the Bijakshara. Immediately he began to pour forth verses in praise of her. Ever since his poetic genius was manifested. He immediately returned home and knocked at the door, when his wife, knowing him to be her husband by his voice asked him thus:

'अस्ति कश्चित् वागर्थः' (i e Have you got any literary wealth?"). Then he at once began to compose extemporaneously the three Kâvyas, namely: Kumarasam-

bhava, Meghaduta and Raghuvamsa, taking each of the words mentioned above as their commencement. मयूर was the father-in-law of Bana and author of the Suryasataka, a work composed by him to be freed from leprosy As he was a contemporary of Bana, he must have lived in the latter half of the sixth or first half of the seventh Century. मङ्क was the author of the Srikantacharita Kavya. पुरातनीं (=पुरा भवा तां)=very old. पूरुषभूमिकां= the disguise or the part of a man. The word पुरुष is sometimes also written as पूरुष । विननर्त 3rd per.sing. Perf. par. of नृत् with वि (to dance or play) IV conj वाणी = Sarasvati, the goddess of learning. **5.** Here the author begins to describe the moon, he being the originator of the family of Achyutaraya. स्मरप्राभृतं प्राभृत =a present or gift. The moon is spoken of as the present to the god of love as the former is the cause of excitement to those affected by love. अदक्षिणं lit. not right i.e. left. शौरेः अदक्षिणं अक्षि = the left eye of god Vishnu. The moon is represented as the left eye of Vishnu, while the sun is spoken of as his right eye. Cf 'भूः पादौ यस्य नाभी...चन्द्रसूर्यौ च नेत्रे etc.' Vishnusahasranama. Learn the declension of अक्षि which is declined like दधि । शेखरपुष्पं = the flower worn on the crest. ऐशं ( = ईशस्य इद) = relating to the god Siva As Siva has the moon on his head, the lat-

ter is described as his crest-flower. Hence Siva has the epithet चन्द्रमौलि or चन्द्रचूड । अपां Gen. pl. fem. of अप् (water) which is always plural. अपां निधेः (lit).=of the receptacle of waters i.e. of the ocean. नाट्यविद्यागुरुः instructor in the science of dancing. The moon is represented as the dancing master of the ocean because the former is the cause of the tide and turbulence of the latter. चकोरीकुलबन्धुः The moon is said to be the friend of the Chakora birds, as the latter are said to feed on moon-beams. The words स्मरप्राभृतं, आक्षि, शेखरपुष्पं, अद्भुतनाट्यविद्यागुरुः and चकोरीकुलबन्धुः are put in apposition with इन्दुः । **6.** प्रायेण (adv. to be used with करोति) = probably or for the most part. Mark the double interpretation in the following:— क्षोणिभृदुत्तमाङ्गे 1. on the summit of mountains 2. on the head of kings. पादार्पणं 1. spreading the rays 2. setting the foot on. सत्पथसेवन 1. moving in the sky 2 following the right path of duty. अरिश्रेणिकदर्थन—1. tormenting the assemblage of the Chakravaka birds. अरि lit. means 'a wheel' (चक्र); thence it came to mean the Chakravaka bird i.e. the ruddy goose. This bird is said to be separated from its mate during the night time; hence the moon is spoken of as the tormentor of

these birds. (2. tormenting the crowd of enemies. कुर्वन्तु 3rd per. pl. Imperat. par. of कृ VIII conj. मम कुलजाः those who are born in my race i.e. in the lunar dynasty. Understand the word मत्वा after इति। **7.** The moon is here said to display the mode of action of the three gods, viz Brahman, Vishnu and Siva, respectively in the following respects, namely: सरोज...स्यात्, सुमनोजनानां सुधाप्रदानात्, and सदापिना...हृदात्। सरोज...स्यात् when applied to the moon, means—'on account of his delight in destroying the happiness of lotuses' For at the rise of the moon lotuses become shut. भद्र= happiness; असन = dispelling or destroying; सौमनस्य = pleasure. When it is applied to Brahman, it means—'on account of his being fond of the lotus throne'. For Brahman is represented as being seated on a lotus, and hence his epithet कमलासन। भद्रासन = a chair of state i.e. throne सुमनोजनानां= to the gods; the word सुमनस् may elsewhere mean 'a learned man'; 'a flower'. सुधाप्रदानात् by the gift of nectar. The phenomenon of the periodical waning of the moon is explained by a myth which states that his nectareous digits are drunk up by different gods in regular rotation. The order is.—

'प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः। विश्वेदेवास्तृतीयां तु चतुर्थीं

सलिलाधिपः ॥ पञ्चमीं तु वषट्कारः षष्ठीं पिबति वासवः । सप्तमामृषयो दिव्या अष्टमीमज एकपात् ॥ नवमीं कृष्णपक्षस्य यमः प्राश्नाति वै कलाम् । दशमीं पिबते वायुः पिबत्येकादशीमुमा ॥ द्वादशीं पितरः सर्वे समं प्राश्नन्ति भागशः । त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम् ॥ चतुर्दशीं पशुपतिः पञ्चदशीं प्रजापतिः ॥' The allusion about Vishnu's giving nectar to the gods is this:—Once upon a time the gods and the demons under the direction of Vishnu churned out the ocean of milk with mount Mandara for the churning stick and serpent Vasuki as a rope and Vishnu (in the form of a tortoise) as the pivot. The goddess Lakshmi, nectar and various other precious things came out after the churning. Thereupon Vishnu assuming the form of a fascinating lady (मोहिनी), cheated the demons of nectar and distributed it to all the gods, one by one, by his own hand. सदापि नाकाश्रयसौहृदात्. when applied to the moon, means—"owing to his attachment to move in the sky always.' नाक = sky; आश्रय= residence; सौहृद= attachment. When it is applied to Siva it means—'owing to his desire for wielding the bow called पिनाक always. सदा= always; पिनाक is the name of the bow of Siva. पुष्णाति from पुष् (to exhibit or display) IX conj. चर्या= the behaviour or conduct. पुरुषत्रयीयां (adj. to चर्या) = belonging to the three great beings: viz: Brahman, Vishnu and Siva. **8**. In this Sloka the moon is represented as a king in as

much as the epithet राजन् (which is derived from the root रञ्ज् to please; रञ्जयति जनान् इति = राजा) is common to both the moon and the king. वियुक्तवर्गे= with regard to those who are separated from their beloved i.e. love-stricken (when applied to the moon); as the moon enhances the anguish of lovers, caused by their separation. When it is applied to king it means—with regard to those who swerve from the right path', or it may mean 'towards his enemies'. संयुक्तलोके= with regard to those who are in company with their beloved (when applied to the moon); and when applied to king it means—'with regard to those who stick up themselves to the right path'; or 'towards those who have joined his side i.e. towards his adherents.' उदश्रितः 1. having risen 2. being well honoured or elevated. राजपदानुकूल (adv.)= suitably to his title as राजन्। मण्डलं 1. orb or disc. 2. territory. अनुरक्त 1. reddened 2. pleased or attached. **9.** In this Sloka the moon is said to have shared the qualities of the wish-yielding trees (कल्पवृक्ष)। आशाभिपूर्तेः 1. to the filling of quarters 2. to the fulfilment of wishes अनुरूपं (adv.)= suitably or agreeably. वर्षन् 1. diffusing or spreading 2. showering or pouring down. वसुमण्डलानि 1. the collection of his rays. 2. immense quantity of wealth. वसु here means both 'ray' and 'wealth'. औदार्यभाजां= endow-

ed with liberality; अवनिरुहाणां = of trees i.e. of Kalpaka trees or the wish-yielding trees in the paradise of Indra. व्यनक्ति from the root अञ्ज् with वि (to manifest) VII conj. सोदरताविलासं the gracefulness of brotherhood. The moon is represented as the brother of the Kalpaka trees as the former is said to have come out of the sea, along with the 5 Kalpaka trees and other precious things, when it was churned out. Vide the quotation in the note on अब्धिकन्या in Sloka 2. **10.** क्षेमंकरः Note the insertion of म् after क्षेम when the root कृ takes the Krit termination अ (खच्) । *Cf.* 'क्षेमप्रियमद्रेऽण् च' Panini. कैरवसंसदां = to the assemblage of white lotuses (Kumuda flowers opening at moonrise); संसद् (fem.) which generally means an 'assembly' or 'meeting', is here used in the sense of 'collection'. **हरस्य वामं ईक्षण** According to some other account the sun, moon and fire are represented to be the three eyes of the god Siva, the sun being his right eye, the moon his left eye and fire the eye on his forehead. उदीर्यते pass. form of ईर् with उद् to call X conj अध्वन्यजनैः अध्वान अलं गच्छति इति= अध्वन्यः or अध्वनीनः = a traveller or way-farer 'अध्वनो यत्खौ' Panini. द्वितीय ईक्षणं the second eye i.e. the sun The moon is called the second eye of Siva i.e. the right eye i.e. the sun, because, the moon torments such travellers like the scorching sun, travellers here

mean the lovers who are away from home and therefore separated from their beloved wives. चक्रकुलैः = by the family or assemblage of the ruddy geese (चक्रवाक) । तृतीयं ईक्षणं the third eye which is on his forehead i.e. fire. The moon is called fire by the Chakravaka birds because the former torments the latter very much at night in which time these birds are said to be separated from their mates and to be united only in the day time. Note that the ordinal form of the numeral adj. एक is प्रथम, that of द्वि and त्रि is द्वितीय and तृतीय, that of चतुर् and षष् is चतुर्थ and षष्ठ, and that of पञ्चन्, सप्तन्, अष्टन्, नवन् and दशन् is respectively पञ्चम, सप्तम, अष्टम, नवम and दशम। **11.** कथं ब्रुवे = how can I describe ? i.e. it transcends all description. ब्रुवे 1st per. sing. Pres. atm. of ब्रू II conj. The object of ब्रुवे is the fact stated in the Sloka. Another and a better reading is कलानिधित्वा। Note the double interpretation in the following:—कलानुषक्ताः 1.= making a sweet and indistinct sound (=कल) 2. endowed with the knowledge of arts or sciences (= कला) । आलोकमात्रात् आलोक here means both 'light' and 'sight' चञ्चरीकाः = the bees 'इन्दिन्दिरश्चञ्चरीको रोलबो बंभरश्च सः ।' Amara. व्याकुर्वते 3rd per. pl. Pres. atm. of कृ with वि and आ (to explain) VIII conj. कैरवपीठिकासु on the seats in the form of white lotuses. After

this understand स्थित्वा or स्थिता: । विषमायुधीयान्= relating to the god of love i.e. erotic. The figurative meaning of this Sloka is:— Generally pupils studying some sciences under a teacher attain proficiency in their learning only after many years' study under him But the pupils in the form of bees, having attained proficiency at the mere sight of their teacher i.e. the moon, at once begin to expound the erotic sciences, being seated on the preceptor's chair in the form of moon-lotus. Hence the author says that it is beyond description. The purport of the Sloka is At the appearance of moonlight, the bees resort to the blooming moon-lotuses and begin to make their humming sounds which excite love in the minds of the youthful.

**12.** विधुः is here used in a double sense i.e. the moon and Vishnu. 'विधुः श्रीवत्सलाञ्छनः' Amara. For the allusion here, vide notes on सुधाप्रदानात् सुमनोजनानां in Sloka 7. ददानः pr. act. p. from दा III conj. atm. अस्वप्रवृत्त्याश्रयणात् (1) owing to his having attained to a state that dispelled darkness (2) for the purpose of providing the gods with a means of subsistence i.e. to distribute nectar to them. अवतारः (1) free from stars (for during moonlight nights only a very small number of stars are seen. Vide the quotation given in the commentary on this verse. (2) incarnation i.e. as a fascinating lady (मोहिनी) । तमसः (1) of darkness (2) of the demon named Rahu The allusion here is.—When the nectar

that was churned out of the ocean, was being served to the gods by Vishnu in the form of a beautiful damsel,the demon Rahu disguised himself as a god and attempted to drink it along with the other gods But he was detected by the sun and the moon who informed Vishnu of the fraud. Vishnu, thereupon, severed his head from the body; but as he had tasted a little quantity of nectar the head became immortal, and is supposed to wreak its negeance on the sun and moon at the time of conjunction and opposition. **13.** आचारत: (ind.) = आचारात् Note the particle तस्, when thus added to a noun, makes it an indeclinable and gives it the sense of the Ablative case. अवदातात् = pure. Note this adjective qualifies the indeclinable आचारत:। अबाधित: =unrestrained or unmingled. आत्मबोधात् from the knowledge of self or spiritual knowledge. तत:(ind.) =then. बुधाख्य: The moon is represented as having carried off Tara, the wife of Brihaspati, by whom he had a son named Budha, who thus became the founder of the lunar race of kings. तत: (ind.)=तस्मात् i.e. from that moon. शम: =restraint of passions or mental quietness. श्रुतानां of the religious sciences. सम्प्रदायात on account of the traditional handing down of instruction. **14.** पुरूरवा: (Nom. sing.mas. of पुरूरवस्) was the son of Budha and Ila and founder of the lunar race of kings. He saw the nymph Urvasi while descending upon earth owing to the curse of Mitra and Varuna,

